(SANSKRIT - ENGLISH)

# संस्कृतश्रीः

## पाठमाला - ३

# SAMSKRITASRI

## PATAMALA - 3

## (SANSKRIT - ENGLISH)

अ आ इ ई उ ऊ

क ख ग घ ङ च




*Published by :*

**SAMSKRIT EDUCATION SOCIETY (REGD.)**

*Head Office :*
Old 212/13-1, New No. 11
St.Mary's Road, R.A. Puram
Chennai - 600 028.
Phone : 2495 14 02

Admn. Office :
283, T.T.K. Road,
Chennai-600 018

1st Edition Bold letters 2017 [Price : 100/-

# पाठमाला - ३ - ENGLISH-3

## विषयसूचिका

# संस्कृतश्रीः - पाठमाला-३

# SAMSKRITHASRI PATAMALA-3

सरस्वति नमस्तेऽस्तु वरदे कामरूपिणि।
विद्यारम्भं करिष्यामि सिद्धिर्भवतु मे सदा॥

## प्रथमः पाठः - Lesson-1

### पद्यानि

उदेति सविता रक्तो, रक्त एवास्तमेति सः।
संपत्तौ च विपत्तौ च महान्तस्तुल्यसौभगाः॥ १॥

अन्वयः - सविता (१-१) रक्तः (१-१) उदेति(लट्.प्र.ए.१)। सः (१.१) रक्तः (१-१) एव (अ) अस्तं (२-१) एति (लट्.प्र.ए)। महान्तः (१-३) संपत्तौ (७-१) विपत्तौ (७-१) च (अ) तुल्य सौभगाः (१-३)।

Glossary :- उदेति rises, सविता - Sun, रक्तः - Red, अस्तं एति - sets; संपत्तौ in the prosperous state तुल्यसौभगाः- equally auspicious (तुल्यं सौभगं येषां ते ) -रक्तः+रक्तः । रक्तः+एव +अस्तं + एति। महान्तः + तुल्य।

कन्या वरयते रूपं माता वित्तं पिता श्रुतम्।
बान्धवाः कुलमिच्छन्ति मृष्टान्नमितरे जनाः॥२॥

अन्वयः - कन्या (१-१) रूपं (२-१)वरयते (लट् प्र,१)। माता (१-१)वित्तं (२-१) (वरयते)। पिता (१-१) श्रुतं (२-१ (वरयते। बान्धवाः (२-३) कुलं (२-१) इच्छन्ति (लट् प्र.३)। इतरे (१,३)जनाः (१-३ मृष्टान्नं (२-१) (इच्छन्ति)

(१-३ मूष्टान्नं (२-१) (इच्छन्ति)

वरयते considers best/selects वित्तं wealth/finance श्रुतं knowledge मृष्टान्नं feast (मृष्टं च तत् अन्नं च)

वनानि दहतो वह्नेस्सखा भवति मारुतः।
स एव दीपं शमयेत् कृशे कस्यास्ति सौहृदम्।। ३।।

अन्वयः - वनानि (२-३) दहतः (६-१) वह्नेः (६-१) मारुतः (१-१) सखा (१-१) भवति (लट् प्र-१) सः(१-१)एव (अ) दीपं (२-१) शमयेत् (विधिलिङ् प्र-१)। कृशे (७-१) सौहृदं (१.१)कस्य (६-१) अस्ति ? (लट् प्र १)

दहतः burning कृशे in the feeble /in the weak सौहृदं friendship/compassion/affection/good heartedness. सन्धिः – दहतः + वह्नेः + सखा, सः + एव, कस्य + अस्ति।

नृत्यत्कल्लोल ! जलधे !कुतो गर्जसि निस्त्रपः।
पश्य तीरे तृषाऽऽक्रान्तःपान्थः पृच्छति वापिकाम्।।४।।

अन्वयः- नृत्यत्कल्लोल (सं १-१),जलधे (सं १-१) निस्त्रपः (१-१) कुतः (अ) गर्जसि (लट् म. १)। पश्य (लोट् म-१) तीरे (७-१) पृच्छति (लट् प्र.१) नृत्यत्कल्लोल oh! one the with dancing waves ! जलधे Oh! sea ! निस्त्रपः shameless तृषा (तृट्) by thirst आक्रान्तः affected/concerned, पान्थः traveller वापिकां about the stream.

सन्धिः – कुतः + गर्जसि, तृषा + आक्रान्तः

पलाशमुकुलभ्रान्त्या शुकतुण्डे पतत्यलिः।

शुको जंबूफलभ्रान्या तमलिं जग्धुमिच्छति॥५॥

अन्वयः-अलिः(१-१)पलाश-मुकुल-भ्रान्त्या(३-१) शुक-तुण्डे (७-१)पतति (लट् प्र.१)शुकः (१-१) जंबू-फल-भ्रान्त्या (३-१) तं (२,१) अलिं (२.१)जग्धुं(अ) इच्छति (लट् प्र.१)।

पलाशः a kind of tree , मुकुलं bud भ्रान्तिः a wrong notion/ delusion,तुण्डं-nose अलिः black bee जंबू-फलं - The rose apple,जग्धुं to swallow

सन्धिः पतति + अलिः, शुकः + जंबू,

पलाशस्य मुकुलं इति भ्रान्तिः तया। जंब्वोः फलमिति भ्रान्तिः, तया

जले तैलं खले गुह्यं पात्रे दानं मनागपि।
प्राज्ञे शास्त्रं स्वयं याति विस्तरं वस्तुशक्तितः ॥ ३ ॥

अन्वयः -जले ((७.१) तैलं (१-१)मनाक् अपि (अ) वस्तुशक्तितः (अ) विस्तरं (२-१) याति (लट् प्र.१)। (तथा) खले (७-१) गुह्यं (१-१), पात्रे (७.१), दानं (१-१) प्राज्ञे (७.१) शास्त्रं (१-१) (च विस्तरं याति।)

खलः wicked, गुह्यं secret, पात्रं deserving,मनाक् अपि even a little, स्वयं on its own, शास्त्रं book-knowledge, विस्तरः expansion, याति attains, वस्तुशक्तितः due to the nature of the stuff, जले तैलं मनागपि वस्तुशक्तितः विस्तरं याति। खले गुह्यं मनागपि वस्तुशक्तितःविस्तरं याति In this way, four sentences can be made out of this verse.

मनाक् + अपि। वस्तुनः शक्तिः तस्मात्।

उदारस्य तृणं विं शूरस्य मरणं तृणम्।

विरक्तस्य तृणं भार्या निःस्पृहस्य तृणं जगत् ॥७॥

उदारस्य (६-१) वित्तं (१-१) तृणम् (१-१)। शूरस्य (६-१) मरणं (१-१) तृणम् (१-१)। विरक्तस्य (६-१) भार्या (१-१) तृणम् (१-१)। निःस्पृहस्य (६-१) जगत् (१-१) तृणम् (१-१)।

तृणं grass, equal to grass in value, विरक्तः dispassionate, निःस्पृहः desireless.

कृपणेन समो दाता न भूतो न भविष्यति।
अस्पृशन्नेव वित्तानि स परेभ्यः प्रयच्छति ॥८॥

कृपणेन (३-१) समः (१-१) दाता (१-१) न (अ) भूतः (१-१)। न (अ) भविष्यति (लृट् १-१)। सः (१-१) वित्तानि (२-३) अस्पृशन् (१-१) एव (अ) परेभ्यः (४.३) प्रयच्छति (लट्.प्र-१)।

कृपणः miser, दाता donor/philanthropist, भूतः was, अस्पृशन्, (न स्पृशन्) without touching, पेरभ्यः to others :

सन्धिः - समः + दाता, भूतः + न, अस्पृशन् + एव, सः परेभ्यः।

वृश्चिकस्य विषं पुच्छे मक्षिकायाश्च मस्तके।
तक्षकस्य विषं दन्ते सर्वाङ्गे दुर्जनस्य तत् ॥९॥

अन्वयः - वृश्चिकस्य (६-१) पुच्छे (७.१) मक्षिकायाः (६-१) च (अ) मस्तके (७.१) विषम् (१.१)। तक्षकस्य (६-१) दन्ते (७-१) विषम् (१-१)। तत् (विषं) (१-१) दुर्जनस्य (६-१) सर्वाङ्गे (७.१).

वृश्चिकः scorpion मक्षिका fly तक्षकः a kind of snake

सन्धिः - मक्षिकायाः + च। सर्वं - अङ्गं तस्मिन्।

नास्ति कामसमो व्याधिर्नास्ति मोहसमो रिपुः।
नास्ति क्रोधसमो वह्निर्नास्ति ज्ञानसमं सुखम् ॥१०॥

अन्वयः -कामसमः (१-१) व्याधिः (१-१) न (अ) अस्ति (लट् प्र.१)। मोहसमः (१-१) रिपुः (१-१) न अस्ति। क्रोधसमः (१-१) वह्निः (१-१) न अस्ति। ज्ञानसमं (१-१) सुखं (१-१) न अस्ति।

कामसमः like lust/equal to lust, मोहसमः similar to perplexity क्रोधसमः like anger, वह्निः fire.

सन्धिः - न+ अस्ति, कामसमः + व्याधिः + न +अस्ति, मोहसमः रिपुः, क्रोधसमः + वह्निः कामेन समः, मोहेन सभः, क्रोधेन समः, ज्ञानेन समम्।

परोपकाराय फलन्ति वृक्षाः परोपकाराय वहन्ति न :।
परोपकाराय दुहन्ति गावः परोपकाराय सतां विभूतयः ॥११॥

अन्वयः -परोपकाराय (४.१) वृक्षाः (१.३) फलन्ति (लट् प्र. ३)। परोपकाराय न : (१.३) वहन्ति (लट् प्र ३)। परोपकाराय गावः (१.३) दुहन्ति (लट् प्र. ३)। परोपकाराय सतां (६.३) विभूतयः (१-३)

वहन्ति flow, दुहन्ति give milk सतां of the noble/of the virtuous, विभूतयः wealth. परेषां उपकारःतस्मै।

शशिना च निशा, निशाया च शशी, शशिना निशया च विभाति नभः।
पयसा कमलं, कमलेन पयः, पयसा कमलेन विभाति सरः ॥ १२

शशिना (३.१) च (अ) निशा (१-१)विभाति (लट् प्र.१)। निशया (३.२) च शशी (१.१) (विभाति)। शशिना निशया च नभः (१.१)(विभाति)। पयसा (३.१) कमलं (१-१),कमलेन (३.१) पयः (१.१), सरः (१.१) कमलेन पयसा च विभाति।

## Excercise

Write the लट् लकार forms in the three persons and in three nos. for the following:

इच्छन्ति, भवति, अस्ति, गर्जसि, पतति, फलन्ति, वहन्ति, प्रयच्छति.

2. Write the verses in order and render their meaning in English.

Here, six sentences can be constructed by using 'विभाति' as the verb. 1. शशी moon, 2. निशा - night, 3. नभः- sky, 4. पयः- water, 5. कमलं - lotus 6. सरः-stream 7. विभाति- shines.

Note: —Syntax rules are scantly observed in the Sanskrit verses. Rearranging the words in a logical prose order is called "अन्वय' in sanskrit. when two words join together, the last letter of the former and the first letter of the latter word are subjected to change. This is known as सन्धिः. The rules of सन्धिः are explained later.

The 'प्र' found in the bracket in the above "अन्वय' stands for प्रथमपुरुष।

★★★

# तृतीयः पाठः - Lesson-3

(Before reading the following, readers are advised to read the earlier part of the ensuing conversation in the 24th lesson of ***Pathamala-2)***

कन्याकुमार्यां सुहृदौ।

अरविन्दः प्रकाशश्च विरामकाले कन्याकुमारीं अगच्छताम्। समुद्रतीरे तिष्ठन्तौ तौ रमणीयं किञ्चित् दृश्यं अपश्यताम्। प्रातः सूर्यः उदधेः उदेति प्राच्यां दिशि। तदैव चन्द्रः प्रतीच्यां दिशि अस्तं एति। एकदैव कस्यचित् उन्नतिः, अपरस्य अवनतिः। तथा सायं सूर्यःअस्तं एति प्रतीच्यां दिशि, चन्द्रः उदेति प्राच्यां दिशि। कतिचिद् दिनानि तत्र तिष्ठन्तौ तौ विचित्रं इदं दृश्यं अधिकृत्य संभाषमाणौ आस्ताम्।

प्रकाशः -अये अरविन्द ! पश्य सूर्यस्य चन्द्रस्य च दशाम्।सा दशा नीचैः गच्छति कदाचित्। कदाचित् उपरि च गच्छति। तत्र च कश्चन क्रमः वर्तते इव। यथा वा चक्रस्य गतिः नीचैः उच्चैः इति क्रमेण परिवर्तते, तथा सूर्यस्य अथवा चन्द्रस्य उदयः अस्तमयश्च क्रमेण संभवतः।

अरविन्तः -एषः क्रमः किं बोधयति ?

प्रकाशः -उदयः व्यसनं च क्रमेण भवतः। यथा सूर्यस्य उदयः अस्तमनं च। सूर्यः उदयेन न स्मयं अनुभवति। अस्तमयेन न दुःखमनुभवति। यथा अहः रात्रिं अनुसरति, रात्रिः अहः अनुसरति, तथा सुखं दुःखं अनुसरति, दुःखं सुखं अनुसरति। एकः दुःखी, अन्यः तदैव सुखी।

अरविन्तः -तथा नु ! सुखानुभवायेति कालो विद्यते वा ?

प्रकाशः - दुःखानुभवकाले दुःखं अनुभवति। सर्वदा सुखी, सर्वदा दुःखी इति कोऽपि न भवति। ततः हर्षं शोकं च विसृज। यत् यत् यदा यदा भवति, तत् तत् तथा तथा अनुभव। सूर्यः एकं महत् तेजः। चन्द्रः अन्यत् महत् तेजः। तथाविधस्य तेजसोऽपि वृद्धिः क्षयश्च भवतः। किमु कथयामि, अस्मादृशानां दशाम्?

अरविन्दः -कथं एतत् त्वया ज्ञातम्।

प्रकाशः -कालिदासो वदति अभिज्ञानशाकुन्तले नाटके -

*यात्येकतोऽस्तशिखरं पतिरोषधीनां*
*आविष्कृतोऽरुणपुरस्सर एकतोऽर्कः।*
*तेजोद्वयस्य युगपद्व्यसनोदयाभ्यां*
*लोको नियम्यत इवात्मदशान्तरेषु।*

अरविन्दः - श्लोकः मम दुरवगाहः। अन्वयं कृत्वा विवेचय।

प्रकाशः -ओषधीनां पतिः (चन्द्रः) एकतः (प्रतीच्यां) अस्तशिखरं याति। एकतः (प्राच्यां) अरुण पुरःसरः (अरुणं पुरतः कृत्वा तं अनुसरन्) अर्कः (सूर्यः) आविष्कृतः (उदितः)। (सूर्यः चन्द्रः इति तेजोद्वयस्य युगपत्(एककालमेव) व्यसन - उदयाभ्यां (व्यसनं-क्षयः, उदयः -उद्गमनं, ताभ्यां) लोकः (जीवसमुदायः) आत्मदशान्तरेषु (आत्मनः स्वस्य, दशा- सुखस्य दुःखस्य च क्रमेण अनुभवकालः तस्य अन्तरेषु - भेदेषु) नियम्यते (बध्यते) इव।

अरविन्दः - सुखं आगतं इति स्मयं मा भज।दुःखं आगतं इति दैन्यं मा भज। हर्षः शोको वा तात्कालिकः। चक्रवत् परिणमति। सम्यक् एतत्।

प्रकाशः -पुनरपि सायं तथा श्वः प्रातश्च आगच्छावः। रमणीयं दृश्यं इदं अनुभवावः।

Glossary: विरामः holiday दृश्यं scene, उदधिः sea, प्राची east प्रतीची west, उन्नतिः rise, अवनतिः down cast, अधिकृत्य regarding दशा a state; a period when one has to experience the results of one's own action. नीचैः down, उच्चैः उपरि on/above क्रमः regular course or method of proceeding, उदयः rise, व्यसनं, sorrow, de-cline, स्मयः arrogance, haughtiness, अहःday time तेजः splendour,majesty. वृद्धिः growth, क्षयःdecline/decay, अस्मादृशः a person who is like us.दुरवगाहः not easily understandable, विवेचय explain,एकतः on one side अरुणपुरःसरः having Aruna as forerunner उद्गमनं upraisingअन्तरं difference, नियम्यते bound.

★★★

# चतुर्थः पाठः - Lesson 4

## हस्तौ काकेन अपहृतौ

माता दौहित्रं आह्वयत्। दौहित्रः मातामह्याः पुरतः आगन्तुं अजिह्नेत्। सः किमपि भक्ष्यं तस्याः अनुमतिं विनैव आदाय बहिः गन्तुं इयेष। मातामही तस्य दुर्वृत्तं अजानात्। तमाहूय अपृच्छत्।

—जात ! हस्तौ ते दर्शय !

—मातामहि !हस्तौ मे काकेन अपहृतौ।

—काकः कुत्र ?

—तिन्त्रिणीवृक्षस्य शाखायां तिष्ठति।

—कुत्र तिन्त्रिणीवृक्षः ?

—छिन्नः।

—तस्मिन् छिन्ने काष्ठानि क्व ?

—दग्धानि।

—दग्धेषु तेषु भस्म क्व ?

—दन्तधावनाय पथिकैर्गृहीतम्।

—तर्हि दन्तधावनाय जलं उपयुक्तं किल ? तत् क्व?

—तेन शाद्वलानि प्ररूढानि।

—तर्हि तानि शाद्वलानि क्व ?

—गवा अजेन च कवलितानि।

—गौः क्व ?

—गोष्ठे तिष्ठति।

—अजः क्व?

—कयA

ापि अजया सह गतः क्वापि।

बालेन ज्ञातं, मातामही उपर्युपरि प्रश्नानुत्थापयेत्। न शाम्येत् इति। हस्तस्थं भक्ष्यं दूरतः उत्सारयामास। हस्तौ मातामह्यै अदर्शयत्।

—अहो मातामहि। पश्य पश्य! प्रत्यागतौ मम हस्तौ।

मातामही सोरःकम्पं अहसत्।

आह्वयत् called, आगन्तुं to come अजिह्रेत् shied इयेष wished, अजानात् knew, जात O! Dear child ! तिन्त्रिणीवृक्षः tamarind tree, छिन्नः was cut, काष्ठानि fire wood दग्धानि were burnt, दन्तधावनाय to brush to teeth, शाद्वलानि -

grass, प्ररूढानि sprouted. गोष्ठ in the cowshed, प्रश्नान् उत्थापयेत् may raise questions. उत्सारयामास threw, प्रत्यागतौ came back(dual), सोरःकम्पं to the shaking of the bo-som.

★★★

# पञ्चमः पाठः - Lesson-5

### नकारान्तशब्दाः

The words ending in न् are of three types the first variety i.e. गुण- बल- धन - मन्त्र where the suffix इन् join is to form गुणिन्, बलिन्, धन्विन्, मन्त्रिन् etc. one who possesses good qualities, strength, who has bow and mantra etc.A few words यशस् तपस्-मेधा, etc combine with विन् and becomesयशस्विन् तपस्विन् मेधाविन् etc one who possesses glory, penance, intellect etc are the meanings. The first case singular. इन् changes to ई गुणी etc.,

नकारान्तः पुंल्लिङ्गः गुणिन् शब्दः

| | | |
|---|---|---|
| गुणी | गुणिनौ | गुणिनः |
| गुणिनं | गुणिनौ | गुणिनः |
| गुणिना | गुणिभ्यां | गुणिभिः |
| गुणिने | गुणिभ्यां | गुणिभ्यः |
| गुणिनः | गुणिभ्यां | गुणिभ्यः |
| गुणिनः | गुणिनोः | गुणिनाम् |

| | | |
|---|---|---|
| गुणिनि | गुणिनोः | गुणिषु |
| हे गुणिन् | हे गुणिनौ | हे गुणिनः |

वनमाली गदी शार्ङ्गी शङ्खी चक्री च नन्दकी।
श्रीमान् नारायणो विष्णुः वासुदेवोऽभिरक्षतु॥

This sloka comes in ***Vishnusahasranamam.*** Here वनमाली, गदी, शङ्खी, चक्री, नन्दकी etc. are example of नकारान्त. अभिरक्षतु - is a verb which is governed by a word in first case (i.e.), नारायणः विष्णुः वासुदेवः etc. All these are adjectives and synonyms of Vishnu here. वनमाली, गदी, शाङ्खी, चक्री, नन्दकी, श्रीमान् - are also other epithets but they all end in न. नन्दकं - is the name of the sword of the Lord. In words मन्त्रिन् शार्ङ्गिन् चक्रिन् the न becomes ण.

| | | |
|---|---|---|
| मन्त्री | मन्त्रिणौ | मन्त्रिणः |
| मन्त्रिणं | मन्त्रिणौ | मन्त्रिणः |

*नकारान्तः पुलिंगः तपस्विन् शब्दः*

| | | |
|---|---|---|
| तपस्वी | तपस्विनौ | तपस्विनः |
| तपस्विनं | तपस्विनौ | तपस्विनः |
| तपस्विना | तपस्विभ्यां | तपस्विभिः |

The other forms are like गुणिन्।

The second variety is आत्मन्, महात्मन्, ब्रह्मन्, अर्वन्(horse) यक्ष्मन् (Tuberculosis) etc are come under this. Here in first/second cases they get long maatras.

### *नकारान्तः पुंलिङ्गः आत्मन् शब्दः*

| | | |
|---|---|---|
| आत्मा | आत्मानौ | आत्मानः |
| आत्मानं | आत्मानौ | आत्मनः |
| आत्मना | आत्मभ्यां | आत्मभिः |
| आत्मने | आत्मभ्यां | आत्मभ्यः |
| आत्मनः | आत्मभ्यां | आत्मभ्यः |
| आत्मनः | आत्मनोः | आत्मनां |
| आत्मनि | आत्मनोः | आत्मसु |
| हे आत्मन् | हे आत्मानौ | हे आत्मानः |

Words *परमात्मन् महात्मन्* are like *आत्मा*

### *नकारान्तःपुंलिगः यक्ष्मन् शब्दः*

| | | |
|---|---|---|
| यक्ष्मा | यक्ष्माणौ | यक्ष्माणः |
| यक्ष्माणं | यक्ष्माणौ | यक्ष्मणः |
| यक्ष्मणा | यक्ष्मभ्यां | यक्ष्मभिः |
| यक्ष्मणे | यक्ष्मभ्यां | यक्ष्मभ्यः |
| यक्ष्मणः | यक्ष्मभ्यां | यक्ष्मभ्यः |
| यक्ष्मणः | यक्ष्मणोः | यक्ष्मणां |
| यक्ष्मणि | यक्ष्मणोः | यक्ष्मसु |
| हे यक्ष्मन् | हे यक्ष्माणौ | हे यक्ष्माणः |

(Here 'न' becomes ण in यक्ष्माणौ, यक्ष्मणा, and यक्ष्मणे, Like this 'अर्वन्' शब्द also becomes अर्वाणौ and अर्वणा ।)

3rd variety is राजन्,पूषन् etc.

## नकारान्त्तः पुंलिगः राजन् शब्दः

| | | |
|---|---|---|
| राजा | राजानौ | राजानः |
| राजानं | राजानौ | राज्ञः |
| राज्ञा | राजभ्यां | राजभिः |
| राज्ञे | राजभ्यां | राजभ्यः |
| राज्ञः | राजभ्यां | राजभ्यः |
| राज्ञः | राज्ञोः | राज्ञां |
| राज्ञि - राजनि | राज्ञोः | राजसु |
| हे राजन् | हे राजानौ | हे राजानः |

Here in राजन् the vowel in ज disappears; ज् + न् becomes ज्ञ same way ष् + ण् the vowel in ष disappears to become ष्णः

Excercise 1: *Translate into English.*

दशरथः रामं राजानं कर्तुं ऐच्छत्।

सर्वं वस्तु आत्मनः कामाय सृष्टम्।

उद्धरेत् आत्मना आत्मानम्।

महात्मना गान्धिना अहिंसया स्वराज्यं सम्पादितम्।

अर्वणः पादेषु एकैकः शफः वर्तते।

अद्यत्वे राज्येषु मन्त्रिणां शासनं अस्ति।

एकेन तेजस्विना सूर्येण जगत् प्रकाशते।

मनस्विनि रामे प्रजाः अस्निह्यन्।

चक्रिणा विष्णुना अहं रक्षितः।

बलिना नरेण सर्वं साध्यते।

तपस्वी वाल्मीकिः तपस्विनं नारदं अपश्यत्।

अयं यक्ष्मणा पीडितः।

राज्ञः आज्ञां मन्त्री प्रकटयति।

गुणी शिष्यः धीमन्तं गुरुं प्रीणयति।

रामः धन्विषु प्रथमं गण्यो भवति।

यशस्विना कविना इदं काव्यं रचितम्।

मेधाविने माणवकाय पुरस्कारः दत्तः।

वनमालिनं भगवन्तं यशोदा देवी पतिं वृतवती।

चित्रे उष्णीषी मम सखा दृश्यते।

***Excercise–2 Translate into sanskrit.***

(1) The one who is with umberlla is my uncle.

(2) The servant with the turban goes somewhere.

(3) Armoured soldiers stand everwhere.

(4) Kings lived in the palaces.

(5) The ascetic,Narada came to Valmiki's hermitage.

(6) Everyone follows the strong (Man)

7.Those afflicted by leprosy go to the village, Cengippatti or to the town, Madanappalli.

8.Sun's rays are hot.

छत्रं umberlla, उष्णीषः Turban or any head wear, उष्णीषी The one who wears a turban, कवचं armour. With these words add इन् and use as 'न' ending words.

उद्धरेत्- lift up.

To know more about the word forms read our *Sabdamanjari.*



## षष्ठः पाठः - Lesson - 6

Atmanepada Dhatus

We learnt in the 2th book about seven types of verbs. We saw about the Vikarana suffixes and also the clues for 1-4-6-10 (अ,य,अ,अय) and also ordinary roots the roots which go by the rules, the roots, which execed the rules etc are the different kinds.

The roots are of two types Parasmai padam and Atmane padam. The formation of these two types are different. Now let's see the suffixes in the termination of verbs in different tenses.

लट् Present Tense

| | **Parasmaipada** | | | **Atmanepada** | | |
|---|---|---|---|---|---|---|
| प्रपु | ति | तः | अन्ति | ते | इते | अन्ते |
| मपु | सि | थः | थ | से | इथे | ध्वे |
| उपु | मि | वः | मः | इ | वहे | महे |

लङ् Past Tense

| | | | | | | |
|---|---|---|---|---|---|---|
| प्रपु | त् | तां | अन् | त | इतां | अन्त |
| मपु | स् | तं | त | थाः | इथां | ध्वं |
| उपु | अं | व | म | इ | वहि | महि |

## लोट् Imperative Mood

| | | | | | | |
|---|---|---|---|---|---|---|
| प्रपु | तु | तां | अन्तु | तां | इतां | अन्तां |
| मपु | — | तं | त | स्व | इथां | ध्वं |
| उपु | आनि | आव | आम | ऐ | आवहै | आमहै |

## विधिलिङ् Potential Mood

| | | | | | | |
|---|---|---|---|---|---|---|
| प्रपु | ईत् | ईतां | ईयुः | ईत | ईयातां | ईरन् |
| मपु | ईः | ईतं | ईत | ईथाः | ईयाथां | ईध्वं |
| उषु | ईयं | ईव | ईम | ईय | ईवहि | ईमहि |

## लृट् Future Tense

| | | | | | | |
|---|---|---|---|---|---|---|
| प्रपु | स्यति | स्यतः | स्यन्ति | स्यते | स्येते | स्यन्ते |
| मपु | स्यसि | स्यथः | स्यथः | स्यसे | स्येथे | स्यध्वे |
| उपु | स्यामि | स्यावः | स्यामः | स्ये | स्यावहे | स्यामहे |

## लृङ् Conditional mood

| | | | | | | |
|---|---|---|---|---|---|---|
| प्रपु | स्यत् | स्यतां | स्यन् | स्यत | स्येतां | स्यन्त |
| मपु | स्यः | स्यतं | स्यत | स्यथाः | स्येथां | स्यध्वं |
| उपु | स्यम् | स्याव | स्याम | स्ये | स्यावहि | स्यामहि |

Some Atmanepada Verbs are introduced hereunder:

| | | | |
|---|---|---|---|
| वन्द्-वन्दे | Salute. | भाष्-भाषावहे | (we two) speak |
| एध्-एधसे | (you)grow | याच्-याचन्ते | beg. |
| ऊह्-ऊहते | guess | सेव्-सेवामहे | (we) Serve |
| ईक्ष-ईक्षेते | (we two) see (dual). | दीप-दीप्यते | Shines. |

Certain roots are Atmanepadam and certain are Parasmai padams. One cannot change a parasmai Pada Dhatu to Atmane pada or vice versa on his accord. That will become a grammatical error.

*E*xample :— दृश्- Parasmaipadam so पश्यति. In the same meaning ईक्ष - ईक्षते - is Atmanepadam Now let us see all the seven लकाराः of सेव्

लट्

सेव् + अ + ते = सेवते

सेव् + अ+ इते = सेवेते

सेव् + अ+ अन्ते = सेवन्ते

सेव् + अ+ से = सेवसे

सेव् + अ+ इथे =सेवेथे

सेव् + अ+ ध्वे = सेवध्वे

सेव् + अ+ इ = सेवे

सेव् + अ+ वहे =सेवावहे

सेव् + अ+ महे = सेवामहे

Let us learn now the Suffixes joined with other Lakaras also.

लङ्

| | | | |
|---|---|---|---|
| प्र | असेवत | असेवेतां | असेवन्त |
| म | असेवथाः | असेवेथां | असेवध्वं |
| उ | असेवे | असेवावहि | असेवामहि |

## लोट्

| | | | |
|---|---|---|---|
| प्र | सेवतां | सेवेतां | सेवन्तां |
| म | सेवस्व | सेवेथां | सेवध्वं |
| उ | सेवै | सेवावहै | सेवामहै |

## विधिलिङ्

| | | | |
|---|---|---|---|
| प्र | सेवेत | सेवेयातां | सेवेरन् |
| म | सेवेथाः | सेवेयाथां | सेवेध्वं |
| उ | सेवेय | सेवेवहि | सेवेमहि |

## लिट्

| | | | |
|---|---|---|---|
| प्र | सिषेवे | सिषेवाते | सिषेविरे |
| म | सिषेविषे | सिषेवाथे | सिषेविध्वे |
| उ | सिषेवे | सिषेविवहे | सिषेविमहे |

## लृट्

| | | | |
|---|---|---|---|
| प्र | सेविष्यते | सविष्येते | सेविष्यन्ते |
| म | सेविष्यसे | सेविष्येये | सेविष्यध्वे |
| उ | सेविष्ये | सेविष्यावहे | सेविष्यामहे |

## लृङ्

| | | | |
|---|---|---|---|
| प्र | असेविष्यत | असेविष्येतां | असेविष्यन्त |
| म | असेविष्यथाः | असेविष्येथां | असेविष्यध्वं |
| उ | असेविष्ये | असेविष्यावहि | असेविष्यामहि |

Write the meaning and the other two numbers in the Same person.

भाषसे, वन्दावहे, सेविष्ये, याचेतां, याचै, सेवावहै, अदीप्यत, ऊहिष्ये, एधामहे, एधेथाः, भाषध्वं, ईक्षेमहि।

★★★

## सप्तमः पाठः - Lesson - 7

## कन्दुकेन क्रीडाव !

—पद्मिनि ! एहि, कन्दुकेन क्रीडाव।

—सुन्दरि ! प्रियं मे। क्षिप कन्दुकम्। अहं गृह्णामि।

—पद्मिनि ! अन्या काचित् क्रीडा। तले कन्दुकं प्रहत्य क्रीडाव। शतं यावत् गणय। यदि मध्ये कन्दुकस्य प्रहरणे विच्छेदः, क्रीडा विच्छिन्ना भवेत्। तर्हि अन्यया क्रीडितव्यम्। एष समयः आवयोः।

—सुन्दरि ! त्वमेव क्रीडां आरभस्व। एकं द्वे त्रीणि... विंशतिः, एकविंशतिः आः, कियत् चिरं त्वमेव क्रीडसि। न मह्यं ददासि।

—पद्मिनि ! त्वमपि मम क्रीडाविच्छेदे जाते कन्दुकं गृहीत्वा क्रीडिष्यसि कुतः विमनायसे ?

—सुन्दरि ! नवतिः, एकनवतिः, आ ! अपविद्धः कन्दुकः, विच्छिन्ना ते क्रीडा। कुतोऽपि गच्छति कन्दुकः।

—पद्मिनि ! त्वरया अनुद्रव कन्दुकम्।

—सुन्दरि ! कुत्र कन्दुकः ? अहो गोवर्धनः इतः। गोवर्धन ! त्वमेव चोरः देहि कन्दुकम्।

—न अहं चोरः ! केनापि आदत्तः स्यात्।

—गोवर्धनो बालो मुग्धमुखः। किं अलीकं भणिष्यति?

—सुन्दरि ! कुतः अन्यं मुधा शङ्कसे? असौ मुग्धवत् भाति। धूर्तः स असौ। न एषः विश्वासं अर्हति। अनेन कति कति दुश्चेष्टितानि प्रत्यहं न क्रियन्ते? कति वारान् असौ न दण्डितः पित्रा?

—अहो ! स्वसः, क्षाम्य ! अयं वां कन्दुकः। मयैव अपहृतः। एवं क्षिप्त्वा पलाये।

क्रीडाव Let (we two) play गणय Count प्रहृत्य after beating प्रहरणे in beating विच्छेदः break / discontinuance. समयः agreement आरभस्व Start कियत् चिरं how long (time). क्रीडाविच्छेदः break in play. विमनायसे feel sad. अपविद्धः Cast or thrown off. कुतोऽपि Some where आदत्तं was taken मुग्धमुखः innocent face. अलीकं Lie मुधा in Vain मुग्धवत् Like an innocent. धूर्तः mischievous. विश्वासः hope दुश्चेष्टितानि mischives प्रत्यहं daily वाराः times. क्षाम्य bear / tolerate. पलाये (I) escape / run.

## अनुवादमाला - १

अहं मदीयं ग्रामं गच्छामि। ग्रामं अभितः क्षेत्राणि सन्ति। तत्र शालिसस्यानि रोहन्ति। सस्येभ्यः धान्यं लभ्यते। वितुषं धान्यं पक्त्वा माता अन्नं साधयति। ग्रामं समया वि ाशाला अस्ति। तत्र सहस्रं माणवकाः पठन्ति। वि ालयं निकषा उ ानं अस्ति। तत्र आम्रतरवः निम्बतरवश्च सन्ति। तेषां शीतलायां छायायां वयं क्रीडामः।

मदीयं mine. शालिः Paddy. सस्यं grain. रोहन्ति grow / yield. लभ्यते is gained / is got. वितुषं without husk, पत्त्वा after cooking. साधयति makes / prepares. सहस्रं thousand आम्रतरवः mango trees. निंबतरव neem trees, अभितः all around; समया, निकषा These three are indeclinables.

★★★

## अष्टमः पाठः - Lesson - 8

रामनाथो गोपालश्च चेन्नपट्टणे कैरविण्यां वसतः । तौ भ्रातरौ । रामनाथः षष्ठ्यां, गोपालो दशम्युत्तरद्वितीयायां च कक्ष्यायां पठतः । रामनाथस्य कक्ष्यापरिक्षा अवसिता । गोपालस्य तु त्रिशिरःपुरस्थं मातुलं द्रष्टुं प्रतिवत्सरं आगच्छतः । मेमासस्य अष्टमीं तारिकां यावत् परीक्षा प्रचलिष्यति । उभावपि विरामकाले त्रिशिरःपुरस्थं मातुलं द्रष्टुं प्रतिवत्सरं आगच्छतः । मेमासस्य एकादश्यां तारिकायां रात्रौ एषौ एलुम्बूरतः प्रस्थास्यभानेन गिरिदुर्गत्वरितगामिना पट्टिकाशकटेन त्रिशिरः पुरीमागमिष्यतः। तदर्थं चीटिकाग्रहणाय अद्य प्रातः तौ एलुम्बूरस्थं पट्टिकासन्धिनिस्थानं अगच्छताम् । चीटिकादानगवाक्षस्य संमुखे बहवः क्रमबद्धाः अतिष्ठन् । गोपालः तेषु द्वादशः अवर्तत । क्रमेण तस्य पूर्वगाः चीटिकाः गृहीत्वा अपागच्छन् । गोपालः गवाक्षान्तः रूप्यकाणि दत्वा मेमासस्य एकादश्यां तारिकायां तयोः उभयोः त्रिशिरःपुरनगरनिस्थानपर्यन्तं प्रयाणाय त्रिस्तरवत्यां शयनपेट्यां, द्वयोः स्थानयोः आरक्षां पत्रमुखेन प्रार्थयत । तत्र स्थानानां

आरक्षार्थे नियुक्तः चीटिकादाता तस्यां तारिकायां तयोरर्थे द्वयोः स्थानयोः आरक्षां अकरोत्। द्वे चीटिके तथा उल्लिख्य गोपालस्य हस्ते अददात्। गोपालः स्वस्य अनुजस्य चागमनं मातुलाय न्यवेदयत् पत्रमुखेन।

कैरविणी Triplicane. दशम्युत्तरद्वितीयायां in the 12th std.[+2]. कक्ष्यापरीक्षा class exam. अवसिता was over. तारिका date. विरामकालः vacation. प्रतिवत्सरं every year. प्रस्थास्यमानेन by the one that will be departing. गिरिदुर्गत्वरितगामि Rockfort Expres. पट्टिकाशकटं train. पट्टिकासन्धिनिस्थानं Railyway Junction-station. चीटिकादानगवाक्षः Ticket issuing counter. संमुखे In front क्रमबद्धाः stood in queue पूर्वगाः one who goes in the front अपागच्छन moved away त्रिशिरःपुरनगरनिस्थानं Trichy station त्रिस्तरवती शयनपेटी Three tier sleeper आरक्षा Reservation चीटिकादाता Ticket clerk उल्लिख्व having written न्यवेदयत् Informed.

★★★

## नवमः पाठः - Lesson - 9

### आत्मनेपदधातवः Atmanepada roots (2)

We saw that अ should be added before the root in the part tense or लङ् लकार। the roots begining with a vowel will join with a long आ. When this अ Joins with the vowel of the roots, the first letter changes to the वृद्धि. form such as आ ऐ औ

like this एधू , ईक्ष, ऊह etc will join with long आ आ+ए=ऐ, आ+ई=ऐ, आ+ऊ=औ are the forms. ऐधत, ऐक्षत औहत are the Pastenses. Let us see all the forms of the root एध्

<u>लट्</u>

| | | |
|---|---|---|
| एधते | एधेते | एधन्ते |
| एधसे | एधेथे | एधध्वे |
| एधे | एधावहे | एधामहे |

<u>लङ्</u>

| | | |
|---|---|---|
| ऐधत | ऐधेतां | ऐधन्त |
| ऐधथाः | ऐधेथां | ऐधध्वं |
| ऐधे | ऐधावहि | ऐधामहि |

<u>लोट्</u>

| | | |
|---|---|---|
| एधतां | एधेतां | एधन्तां |
| एधस्व | एधेथां | एधध्वं |
| एधै | एधावहै | एधामहै |

<u>विधिलिङ्</u>

| | | |
|---|---|---|
| एधेत | एधेयातां | एधेरन् |
| एधेथाः | एधेयाथां | एधेध्वं |
| एधेय | एधेवहि | एधेमहि |

<u>लृट्</u>

| | | |
|---|---|---|
| एधिष्यते | एधिष्येते | एधिष्यन्ते |
| एधिष्यसे | एधिष्येथे | एधिष्यध्वे |
| एधिष्ये | एधिष्यावहे | एधिष्यामहे |

लृङ्

| | | |
|---|---|---|
| ऐधिष्यत | ऐधिष्येतां | ऐधिष्यन्त |
| ऐधिष्यथाः | ऐधिष्येथां | ऐधिष्यध्वं |
| ऐधिष्ये | ऐधिष्यावहि | ऐधिष्यामहि |

*Atmanepada verbs and meaning*

| | | |
|---|---|---|
| लभ् | लभते | gets |
| स्पर्ध | स्पर्धते | competes |
| वेप् | वेपते | trembles |
| कंप् | कम्पते | trembles |
| लंब् | लम्बते | hangs |
| हेष | हेषते | neighs (horse) |
| जृम्भ् | जृम्भते | yawns |
| स्पन्द् | स्पन्दते | throbs |
| स्रंस् | स्रंसते | slips |
| भ्रंश् | भ्रंशते | tumbles |
| त्रप् | त्रपते | is abashed/is ashamed |
| लज्ज् | लज्जते | shies |
| अय् | अयते | goes |
| ईह् | ईहते | likes |
| त्वर् | त्वरते | hurries |
| प्रथ् | प्रथते | becomesfamous |
| बाध् | बाधते | troubles |
| गाह् | गाहते | goes deep into |

| | | |
|---|---|---|
| सह् | सहते | tolerates |
| शंङ्क | शङ्कते | doubtes |
| वेष्ट् | वेष्टते | wears, wraps |
| व्यथ् | व्यथते | becoming afflicted |
| भज | भजते | obtains/worships |
| कत्थ् | कत्थते | brags |
| सज्ज् | सज्जते | sticks or ruts |
| रम | रमते | rejoices |
| मुद्(मोद) | मोदते | to be glad |
| रुच्(रोच्) | रोचते | is liked |
| शुभ्(शोभ्) | शोमते | shines |
| वृत्(वर्त) | वर्तते | is |
| द्युत्(द्योत्) | द्योतते | shines/glows. |
| कम् | कामयते | desires |
| सू | सूयते | delivers |
| दू | दूयते | suffers tain |
| दीप् | दीप्यते | gutters. |
| दू | दूयते | suffers pain |
| दीप् | दीप्यते | glitters |
| विद् | वि ते | is |
| युध् | युध्यते | fights |
| डी | डयते | flies |
| पद् | पद्यते | goes/attains |
| जन्-जा | जायते | is born |
| मृ | म्रियते | dies |

The roots in the 10th conjugation are mostly in both parasmaipada and atmanepada. so चोरयति-चोरयते, अर्थयति -अर्थयते, योजयति-योजयते are the forms.

The following are the roots in various लकाराः

| लट् | लङ् | लोट् | विधिलिङ् | लृट् |
|---|---|---|---|---|
| एधते | ऐधत | एधतां | एधेत | एधिष्यते |
| ऊहते | ओहत | ऊहतां | ऊहेत | ऊहिष्यते |
| ईक्षते | ऐक्षत | ईक्षतां | ईक्षेत | ईक्षिष्यते |
| वन्दते | अवन्दत | वन्दतां | वन्देत | वन्दिष्यते |
| द्योतते | अद्योतत | द्योततां | द्योतेत | द्योतिष्यते |
| प्रकाशते | प्राकाशत | प्रकाशतां | प्रकाशेत | प्रकाशिष्यते |
| सहते | असहत | सहतां | सहेत | सहिष्यते |
| वेष्टते | अवेष्टत | वेष्टेतां | वेष्टेत | वेष्टिष्यते |
| म्रियते | अम्रियत | म्रियतां | म्रियेत | मरिष्यते |
| अर्थयते | आर्थयत | अर्थयतां | अर्थयेत | अर्थयिष्यते |
| रमते | अरमत | रमतां | रमेत | रंस्यते |

*Translate into English*

अस्मिन् गुरुकुले शतं विद्यार्थिनः वर्तन्ते।

ते प्रातः आगत्य आचार्यात् उपदेशं लभन्ते।

पाठ्येषु तेषां कौशलं दृष्ट्वा गुरवः मोदन्ते।

अस्मिन् अरण्ये बहवः गजाः विद्यन्ते।

तदा तदा ते बृंहन्ते।

गजस्य मुखात् शुण्डा लम्बते

वयं त्रयः सहस्रेमितिधावने स्पर्धामहे। (मितिः meter)

सीता रावणं दृष्ट्वा प्रवाते कदली इव अवेपत।

हयः सादिनं दृष्ट्वा ह्रेषते।

बहवः छात्राः परीक्षायां उत्तीर्णाः पारितोषिकं लभन्ते।

कन्या वरं दृष्ट्वा त्रपते। (लज्जते)

श्रान्तो बालकः कक्ष्यायां जृंभते।

भीष्मादीन् दृष्ट्वा अर्जुनस्य हस्तात् गाण्डीवं अभ्रंशत।

शुक्लपक्षे चन्द्रकला प्रतिदिनं वर्धते।

दिवा सूर्यः प्रकाशते। रात्रौ च नक्षत्राणि प्रकाशन्ते।

बालाः प्रदर्शिनीं द्रष्टुं त्वरन्ते।

प्रयागे गङ्गा यमुना सरस्वती च सम्मिलन्ति। अतः तत्स्थलं त्रिवेणीनाम्ना प्रथते।

शिरोवेदना मां अतीव बाधते।

महिषाः तटाकं गाहन्ते।

पुरा कांग्रस्कक्षीयाः आङ्गलेयानां महान्तं उपरोधं असहन्त।

लक्ष्मणः स्वर्णमृगं दृष्ट्वा अशङ्कत।

लताः वृक्षान् वेष्टन्ते।

बुद्धः यागपशून् दृष्ट्वा अव्यथत।

अल्पज्ञः जनः विकत्थते, प्राज्ञः बहुशः तूष्णीं वर्तते।

लङ्कां गत्वा, सीतां दृष्ट्वा प्रतिनिवृत्तं हनुमन्तं रामः अस्वजत।

तैलशून्यं चक्रं अक्षे सज्जते।

★★★

# दशमः पाठः - Lesson - 10

## आपणं गच्छावः

मोहनः – प्रिय सोहन, किं त्वं मया सह आपणं आगमिष्यसि ?

सोहनः – बाढम्, अहं अपि अवश्यं आगमिष्यामि।

मोहनः – तत्र किं करिष्यसि ?

सोहनः – अहं वस्त्राणि पादत्राणे च क्रेष्यामि।

मोहनः – ह्यः अहं मम वस्त्रजातं अक्रीणाम्।

सोहनः – अ त्वं किं क्रेष्यसि ?

मोहनः – पादत्राणमात्रम्।

सोहनः – त्वरितं आगच्छ। (उभौ आपणं गच्छतः)

मोहनः – प्रियसोहन, पश्य ! द्वौ रक्षिणौ पुरुषं नयन्तौ गच्छतः।

सोहनः – ओह् ! आगच्छ, आगच्छ, किमर्थं सः पुरुषः ताभ्यां गृहीतः? पश्याव।

मोहनः – बाढम्, अहं अपि ज्ञातुं इच्छामि।

सोहनः – असौ चोरः भवेत् इति अहं मन्ये।

मोहनः –अहं अपि तथैव चिन्तयामि।

सोहनः –गच्छतु असौ। फलानां आपणं आगच्छ।

मोहनः –साधु, अत्र बहवः फलापणाः सन्ति। त्वं कानि फलानि क्रेतुं इच्छसि?

सोहनः –मह्यं आम्रफलानि रोचन्ते। हे फलविक्रेतः, फलानां मूल्यं किम्?

आपणिकः – एकैकस्य फलस्य मूल्यमेकं रूप्यकम्।

मोहनः – मह्यं एकं देहि आस्वादयानि। एतत् मधुरं वा न वा इति ज्ञातुं

इच्छामि।

आपणिकः– सर्वाणि फलानि मधुराणि एव। न अत्र कोऽपि सन्देहः।

मोहनः – साधु, मूल्यं गृहाण। (उभौ फलानि क्रीत्वा गच्छतः)

पादत्राणे foot wear, वस्त्रजातं clothes, रक्षिणौ Two wathchmen, विक्रेतः seller ! (in सम्बोधनप्रथमैकवचन)

★★★

# एकादशः पाठः - Lesson - 11

अरविन्दः –प्रकाशश्च।

अरविन्दः – भ्रातः। चिराय त्वां पश्यामि।

प्रकाशः – सत्यम्।डिल्लीं गतः आसम्। ह्यः एव प्रत्यागतः। एहि वृक्षच्छायायां उपविशावः।

अरविन्दः – अपि कुशलम्?

प्रकाशः – कुशलम्। अपि ते परीक्षा संपूर्णा (संपन्ना)?

अरविन्दः – सम्पन्ना। परं कठिना आसीत्।

प्रकाशः – कुतः? किं न सम्यक् पठितम्?

अरविन्दः – पठितम्। अथापि श्रमः आसीत्।

प्रकाशः – कश्चित् पर्वतं आरोहति। अन्यः पर्वतात् अवतरति। कस्य श्रमः अधिकः?।

अरविन्दः – यः आरोहति, तस्य।

प्रकाशः – कुतः?

अरविन्दः – भूमेः आकर्षणशक्तिः अस्ति। तस्याः प्रतीपं गच्छति। ततः श्रमः अधिकः।

प्रकाशः – साधु। नदी प्रवहति। तस्यां एकः अनुप्रवाहं तरति।

अन्यः प्रतीपं तरति। कस्य श्रमः अधिकः?

अरविन्दः – यः प्रतीपं तरति, तस्य।

प्रकाशः – कुतः?

अरविन्दः – नदी निम्नं प्रति वेगेन प्रवहति। मनुष्यः वेगस्य प्रतीपं गच्छति। अतः तस्य श्रमः अधिकः।

प्रकाशः – गुरुः उपदिशति। शिष्यः अधिगच्छति। कस्य श्रमः अधिकः?

अरविन्दः – शिष्यस्य।

प्रकाशः – कुतः?

अरविन्दः – न जाने। गुरुः असकृत् वदति। "अतीव सरलं एतत्। इदमपि न जानासि वा?" इति।

प्रकाशः – वयस्य! शृणु। कारणं वदामि। गुरुः पाठस्य विषयं जानाति। यत् जानाति तत् वदति। अतः तस्य श्रमः न। अवतरणं सुकरं किल? शिष्यः शब्दात् तत् (ज्ञानं) अधिरोहति। सः न जानाति। आचार्यस्य वाक्यात् तत् (ज्ञानं) जानाति। अतः श्राम्यति।

अरविन्दः – एवं वा? गुरोः शब्दं शृणोमि। ततः तस्यार्थं चिन्तयामि। ततः तत्वं कथ[ ]ित् मनसि धारयामि। अतः क्लिश्यामि।

प्रकाशः – एवं एतत्। गुरुः अपि अध्ययनकाले एवमेव अक्लिश्यत्। अतः उत्साहवान् भव।

ज्ञानात् शब्देऽवतरति शब्दात् तद् अधिरोहति।
विनेता च विनेयश्च परः श्राम्यति नाऽऽदिमः॥

अरविन्दः – अहं अन्वयं वदामि।

प्रकाशः – कथय।

अरविन्दः – विनेता ज्ञानात् शब्दे अवतरति

प्रकाशः – कः अर्थः।

अरविन्दः – गुरुः ज्ञानात् शब्दे अवतरति। ज्ञात्वा उपदिशति।

प्रकाशः – ततः परम्?

अरविन्दः – विनेयः शब्दात् तत् अधिरोहति। शिष्यः शब्दं श्रुत्वा ज्ञानं प्राप्तुं प्रयत्नं करोति।

प्रकाशः – साधु उक्तम्। (साधूक्तम्)

अरविन्दः – परः (पश्चादुक्तः) शिष्यः श्राम्यति। आदिमः (पूर्वं उक्तः) न। न श्राम्यति।

प्रकाशः – बले! बले!!

चिराय Afer a long time प्रति +आ+ गतः =प्रत्यागतः – I returned, अपि - denotes question in the beginning of a sentense. परं - but, अथापि - even then, प्रतीपं - against the cause, अनुप्रवाहं - following the current, तरति - swims, निम्नं - lowground, जानाति - knows, अधिरोहति - ascends, , शृणोमि -I hear, क्लिश्यामि - I suffer, विनेता - the teacher, विनेयः - the student, श्राम्यति - strains, बले! बले!! - a word of praise.

While teacher descends from Knowledge to words, the taught ascends from words to knowledge. So the latter feels fatigued, while the former does not.



# द्वादशः पाठः - Lesson - 12

### A Few आत्मनेपद roots

| | | |
|---|---|---|
| स्पन्द् | स्पन्दते | Throbs. |
| भ्राज् | भ्राजते | shines |
| भाष् | भाषते | speaks |
| श्लाघ् | श्लाघते | praises |
| क्षम् | क्षमते | Tolerates, is capable |
| गाह् | गाहते | plunges, enters. |
| शिक्ष | शिक्षते | learns |
| भिक्ष् | भिक्षते | begs |
| ध्वंस | ध्वंसते | perishes |
| चेष्ट् | चेष्टते | acts |
| क्लृप | कल्पते | fit for |
| डी | डयते | flies |
| स्मि | स्मयते | becomes proud, gets surprised |
| तप | तप्यते | does penances, suffers |
| मन् | मन्यते | thinks |
| दीप् | दीप्यते | shines |
| जा | जायते | is born |
| बुध | बुध्यते | Knows |
| युध | युध्यते | fights |
| रुध | रुन्धते | obstrects |

द्रि द्रियते gives respect - mostly it is used with a prepostion

आ

***A few examples:***

| लङ् | लोट् | विधिलिङ् | लृट् |
|---|---|---|---|
| अस्पन्दत | स्पन्दतां | स्मन्देत | स्पन्दिष्यते |
| अभ्राजत | भ्राजतां | भ्राजेत | भ्राजिष्यते |
| अभाषत | भाषतां | भाषेत | भाषिष्यते |
| अश्लाघत | श्लाघतां | श्लाघेत | श्लाघिष्यते |
| अक्षमत | अगाहत | अशिक्षत | अध्वंसत |
| अक्षमत | क्षमतां | क्षमेत | क्षमिष्यते |
| अगाहत | गाहतां | गाहेत | गाहिष्यते |
| अशिक्षत | शिक्षतां | शिक्षेत | शिक्षिष्यते |
| अध्वंसत | ध्वंसतां | ध्वंसेत | ध्वंसिष्यते |
| अचेष्टत | चेष्टतां | चेष्टेत | चेष्टिष्यते |
| अशोभत | शोभतां | शोभेत | शोभिष्यते |
| अकल्पत | कल्पतां | कल्पेत | कल्पिष्यते |
| अडयत | डयतां | डयेत | डयिष्यते |
| अस्मयत | स्मयतां | स्मयेत | स्मयिष्यते |
| अकामयत | कामयतां | कामयेत | कामयिष्यते |
| अतप्यत | तप्यतां | तप्येत | तप्स्यते |
| अमन्यत | मन्यतां | मन्येत | मंस्यते |

| | | | |
|---|---|---|---|
| अविद्यात | विद्यातां | विदूयेत | वेत्स्यते |
| अदीप्यत | दीप्यतां | दीप्येत | दीपिष्यते |
| अजायत | जायतां | जायेत | जनिष्यते |
| असूयत | सूयतां | सूयेत | सोष्यते सविष्यते |
| अबुध्यत | बुध्यतां | बुध्येत | भोत्स्यते |
| अयुध्यत | युध्यतां | युध्येत | योत्स्यते |
| अरुध्यत | रोध्यतां | रुध्येत | रोत्स्यते |
| अदूयत | दूयतां | दूयेत | दोष्यते |
| आद्रियत | आद्रियतां | आद्रियेत | आदरिष्यते |
| अम्रियत | म्रियतां | म्रियेत | मरिष्यते |

***Translate into English***

मनुष्यस्य दक्षिणवामयोः हस्तयोः रक्तनाडी स्पन्दते।

स्पन्दनं अनुसृत्य रुग्णस्य परिस्थितिं बोधते।

माता यया भाषया अर्भकेन सह भाषते, सा मातृभाषा।

भगवान् दीनानां अपराधान् क्षमते।

ग्रीष्मेषु महिषाः पङ्किलानि निपानानि गाहन्ते।

बालः शङ्करः कालटीग्रामे कस्याश्चित् दरिद्रायाः गृहस्य द्वारे अभिक्षत। परं सा तस्मै किमपि दातुं न अकल्पत।

जनाः स्थानात् भ्रष्टं निन्दन्ति, पुनः तमेव स्थानमापन्नं श्लाघन्ते।

यथा यथा शासनं परिवर्तते, तथा तथा पारिवारिकाः चेष्टन्ते।

"यदि एकस्य नरस्य भोजनं न सुलभं, तर्हि जगदेव ध्वंसतां" इति भारती गर्जति स्म।

दन्ताः केशाः नखाः नराश्च, यदि स्थानभ्रष्टाःतर्हि न शोभन्ते । अतः कोऽपि स्थानं न परित्यजेत् ।

पाण्डवाः कौरवाश्च द्रोणाचार्यात् अस्त्रवि ं अशिक्षन्त ।

इयं वीथी नालदीपैः द्योतते ।

मोदकः बालकाय रोचेत एव ।

यदि महात्मा गान्धिः पुनः अजीविष्यत् तर्हि अस्य देशस्य परिस्थितिं दृष्ट्वा अशोचिष्यत (अस्मयिष्यत) ।

| | |
|---|---|
| दक्षिणवामयोः | Right & Left. |
| रक्तनाडी | Blood Vessel. |
| स्पन्दनं | Throbbing. |
| रुग्णस्य | of the sick person. |
| परिस्थितिः | Condition. |
| अर्भकः | Baby. |
| ग्रीष्मः | Summer. |
| पङ्किलं | Turbid. |
| निपानं | Pond. |

***Excercise: Translate into SanSkrit.***

1. Lightning Sparks in the sky.
2. Kousalya gave birth to Rama.
3. The Moon shines in the blue sky.

4. Dasaratha wanted to make Rama, the king.(राजानं कर्तुं)

5. You learn music. (शिक्ष)

6. You will learn music and dancing.

7. Great people don't lie

8. Clock beats second after second (प्रतिक्षणं)

9. Rama entered the forest.

10. I don't like surana root (सूरणकन्दं)

11. We are happy with your coming

12. The sparrows fly (चटका) by moving (विधूय) their wings(पक्षान्)

13. The people of Ayodhya wished that 'let Rama become the king'.

14. Sita gave birth to twins (यमलौ पुत्रौ) in the hermitage of Valmiki.

15. "People support us' so all the candidates (सर्वे अपि अपेक्षकाः) think.

16. Dasaratha had a curse 'You may die due to the agony caused by the separation from the son.

17. People of Assam (असमीयाः प्रजाः) prevent the export (बहिर्गमनं) of kerosene oil. (मृत्तैलस्य)

18. Kamsa become and that $8^{th}$ son was going to be born to Devaki.

19. O Lord kindly pardon my mistakes.

----*-----

## Lesson - 13

# अभिज्ञान शाकुन्तलम् - १

This is a brief form of the famous Sanskrit drama written by Kalidasa. we will learn the difficult words and their usages. Read this and try to translate in English.

### प्रार्थना

भूरापोऽग्निर्मरुद्व्योम सूर्यश्चन्द्रश्च दीक्षितः।
प्रत्यक्षास्तनवो यस्य स शं तनोतु नः ।।

### *प्रथमं दृश्यम्*

(स्थानं - हिमवतः प्रदेशः। मालिनीतीरं, तत्र कण्वस्य ऋषेः आश्रमः। हरिणः कश्चित् वेगेन धावति। युवराजः दुष्यन्तः रथेन त्वरितं हरिणं अनुसरति, तं बाणेन वेद्धुं इच्छति। सारथिः परावृत्तः दुष्यन्तं पश्यति)

सारथिः - राजकुमार! इमं हरिणं, धनुष्पाणिं त्वां च पश्यन् अहं दारुकावने हरिणं अनुधावन्तं कैलासपतिं स्मरामि।

दुष्यन्तः - सूत! अनेन सारङ्गेण वयं सुदूरं आकृष्टाः। अयं इदानीमपि वेगेन धावति। पश्य! पश्य! सुदूरं गतः हरिणः।

सारथिः - भूमिः अत्र न समा। उत्खाताः बहवः। अतः रथः मन्दं गच्छति। इतः परं समा भूमिः दृश्यते।

दुष्यन्तः - तर्हि अभीशून् विमुञ्च।

सूतः - यत् आज्ञापयति आयुष्मान्। इदानीं अश्वाः वायुवेगेन धावन्ति।

दुष्यन्तः- (रथवेगं अनुभवन्) सूत! इदानीं रथो वेगेन चलति किल अतः यत् दूरतः सूक्ष्मं क्षणात् प्राक् अवर्तत, तत् क्षणात् विपुलं भवति। यद्

वक्रं अभवत्, तत् समरेखं भवति। हन्त! न किमपि दूरे, न वा समीपे। न च पार्श्वे। सर्वं क्षणेन तिरोभवति। अहो रथस्य वेगः! एष हतः हरिणः। (चापे शरं सन्दधाति। तदा रथस्य पुरतः तपस्विनः उपस्थिताः।)

तपस्विनः - भो राजन्। अयं आश्रममृगः। न हन्तव्यः। न हन्तव्यः।

दुष्यन्तः - (ससंरम्भं) वाजिनः प्रगृहाण। (सूतः रथं स्थापयति। तपस्विषु अन्यतमः वैखानसः पुरतः आगच्छति। द्वौ ऋषिकुमारौ तं अनुगच्छतः)

वैखानसः - (हस्तं उद्यम्य) आश्रममृगः अयम्। न हन्तव्यः। न हन्तव्यः। तूलराशौ अग्निं मा क्षिप। अतिलोलं हरिणस्य जीवितम्। तव शराः वज्रसाराः।

दुष्यन्तः - एषः प्रतिसंहरामि। (शरं तूणीरे निक्षिपति)

वैखानसः - सदृशं एतत् तव, पुरुवंशे जातस्य राज्ञः। एवंगुणोपेतं चक्रवर्तिनं पुत्रं आप्नुहि। (राजा तान् प्रणमति।)

वैखानसः - राजन्! वयं समिधां आहरणाय प्रस्थिताः। एषः कुलपतेः कण्वस्य आनमः। अन्यत् कार्यं न चेत् अतिपतति, आश्रमं प्रविशतु भवान्। अतिथेः उचितं सत्कारं आप्नोतु।

दुष्यन्तः - अपि कुलपतिः अत्र सन्निहितः?

वैखानसः - इदानीमेव सोमतीर्थं गतः। तस्य दुहिता शकुन्तला सन्निहिता। सा अतिथेः सत्कारं करिष्यति। साधयामः। (तपस्विनः निर्गच्छन्ति।)

दुष्यन्तः - सूत ! चोदय अश्वान्। आश्रमदर्शनेन आत्मानं पुनामि।

सूतः - यत् आज्ञापयति आयुष्मान्। (रथः चलति।)

दुष्यन्तः - सूत ! आश्रमभूमिं आगताः वयम् । तत् अत्रैव रथं स्थापय। अवतरामि।

सूतः - तथा। धृताः प्रग्रहाः अवतरतु आयुष्मान्।

दुष्यन्तः - (अवतीर्य) सूत ! आश्रमं प्रविशामि । त्वमपि अत्र अश्वान् विश्रामय।

सूत - तथा।

राजा - (परिक्रम्य अवलोक्य) इदं आश्रमद्वारम्।प्रविशामि। शान्तं इदं आश्रमपदम्। (आत्मानं अवलोकयन् ) अये ! दक्षिणः बाहुः स्फुरति। शुभं निमित्तं किल ? अथवा यद् भवितव्यं तत् सर्वत्र भवति। (नेपथ्ये-कन्यकाः परस्परं आलपन्ति। कर्णं दत्वा) अये ! वृक्षवाटिकां दक्षिणेन आलापः। अत्र गच्छामि। एताः तपस्विकन्यकाः । बालपादपानां जलं दातुं इतः एव आगच्छन्ति। (ताः पश्यन् )मधुरं आसां दर्शनम्। इमां वृक्षच्छायां आश्रित्य ताः प्रतिपालयामि।

(यवनिका परिवर्तते।)

Hard words - Frist Mangala sloka can be split up into Sandhis.

भूः आपः अग्निः मरुत् व्योम सूर्यः चन्द्रः च प्रत्यक्षाः तनवः यस्य, सः शम्भुः ।

भूः earth, आपः water, (always plural) मरुत् -wind व्योम-sky (space) दीक्षितः-one who is ready to perform

yaga. प्रत्यक्षाः-which are directly experienced, तनवः (तनुः) bodies, शं तनोतु-spread or expand auspiciousness दृश्यं-scene, मालिनी-name of a river, त्वरितं-quickly. दारुकावने-in the forest, Daruka, अनुधावन्तं-running after, आकृष्टाः -who were dragged. उत्खाताः-uneven ground (with ditches etc).अभीशून् विमुञ्च -loosen the rein, विपुलं expanse, तिरोभवति -disappear एष हतः हरिणः This deer was hit. सन्दधाति touches, fixes, न हन्तव्यः- should not be killed. अन्तरे -in the midst उपस्थिताः-present. प्रगृहाण pull it or stop it उद्यम्य–raising. तूलराशिः- pile of or bale of cotton. मा क्षिप-don't throw. आप्नुहि - you shall get. सन्निहितः-sitting close to. साधयामः-(here)we will go.निर्गच्छति-going out.–चोदय-you persuade पुनामि- let me purify it. प्रग्रहः-rein. धृतः-pulled tightly. अवतरतु-let him get down. विश्रामय-give relaxation स्थापयति make it stops, नेपथ्ये-behind the curtain. कर्णं दत्वा-listening वृक्षवाटिका rows of trees or garden. दक्षिणेन on the right यवनिका परिवर्तते–curtain changes.पूर्वेण, अपरेण, दक्षिणेन, उत्तरेण -all are indeclinables. They look like विभक्ति-so they are विभक्तिप्रतिरूपकं अव्ययं, so the east to the sonth etc. The word prior to it will be in द्वितीया

उदाहरणम् - आलयं पूर्वेण, वीथीं पश्चिमेन (अपरेण), गिरिं दक्षिणेन, विन्ध्यं उत्तरेण, श्रीरङ्गं दक्षिणेन *etc. etc.*

उदाहरणम् - आलयं पूर्वेण, वीथीं पश्चिमेन (अपरेण), गिरिं दक्षिणेन, विन्ध्यं उतरेण, श्रीरङ्गं दक्षिणेन etc. etc.

## चतुर्दशः पाठः Lesson -14

### धातवः- उपसर्गाश्च

### Dhatus & Upasargas

We have seen Upasargas before. They joined with the root change the meaning. Dhatus are of two types – अकर्मक and सकर्मक. Dhatus with these prepositions may change from transitive (सकर्मक) to intransitive (अकर्मक) or from intransitive to transitive. Prepositions are 22 in numbers. It is not necessary that these will join with each root. At times 2 or 3 prepositions will join with a root. A few examples.

1.भू - भव् (अकर्मकं) भवति - is प्रभवति - originates, becomes capable, सम्भवति - happens, अनुभवति - (transitive) experiences, उद्भवति - originate, अभिभवति - defeats, exceeds. e.g.:- सः नीरोगः भवति । गिरेः नदी प्रभवति। मनसि दुष्टे कलहः संभवति। साधु कर्म कुर्वन् सुखं अनुभवति। भूमेः वृक्षः उद्भवति। रामः रावणं अभिभवति।

2. शुच् - शोच् - शोचति - feels sad, अनुशोचति -repents.

e.g.:- विभीषणः भ्रातरं स्मरन् शोचति। रावणः इन्द्रजिति हते स्वेन कृतं दुष्कृतं अनुशोचति।

३.जप - जपति - repeatedly muttering anything silently, उपजपति - secreltly whispering, ऋषिः ईश्वरस्य नाम जपति। मन्थरा कैकेय्याः कर्णे उपजपति।

४. चर - चरति - walks, प्रचरति - goes in all the directions/spreads, स ञ्चरति-travels, अनुचरति - goes with, आचरति (सकर्मकं) - does continuously अतिचरति (सक) - transgresses उच्चरति (सक) - pronounces, अभिचरति - to act wrongly, व्यभिचरति (वि + अभि + चरति) - indulges in prostitution / unchaste action or transgresses the rules, परिचरति - helps as a sub-ordinate, उपचरति - attends to / serves.

सः वीथ्यां चरति। तस्य विजयवार्ता प्रचरति। मम पिता देशं परितः सञ्चरति। तस्य पुत्रः पितरं सर्वदा अनुचरति। श्रेष्ठः नरः शुभं आचरति। दुष्टः साधुं मार्गं अतिचरति। बालः श्लोकान् सम्यक् उच्चरति। मान्त्रिकः पत्नीं वशीकर्तुं अभिचरति। तस्य भार्या दुष्टा व्यभिचरति। अयं सेवकः कार्यालये सम्यक् परिचरति। अन्नापणे कर्मकरः आगतान् मिष्टेन भोजनेन उपचरति।

५. लप - लपति -talks, प्रलपति - blabbers, prattles, विलपति - Weeps, wails, अपलपति- denies, disowns संलपति - converses, आलपति -sings.

भार्या एकान्ते किमपि लपति। सः धनं नष्टं इति प्रलपति। निद्राणः स्वप्ने किमपि दृश्यं दृष्ट्वा प्रलपति। माता पुत्रं गतं ज्ञात्वा विलपति। ऋणं गृहीतवान् रामः ऋणं न गृहीतं इति अपलपति। रामः भ्रातृभिः सह संलपति। गायिका भैरवीरागं आलपति।

६-गै - गायति sings, विगायति - talks degradingly, उद्गायति - sings loudly.

रामः मधुरं गायति। सः अलब्धवेतनः स्वामिनमधिकृत्य विगायति। कोलाहलः महान् रंगे। अतः सीता उद्गायति।

७. दा - यच्छ् - यच्छति gives, प्रयच्छति -gives nicely.

रामाय सीतां यच्छति जनकः । प्रभो वेङ्कटेशः मह्यं प्रियं प्रयच्छ ।

८. यम् - controls, नियच्छति संयच्छति - controls nicely, उ च्छति -tries.

मुनिः मनः यच्छति । साधकः स्वे लक्ष्ये मनो नियच्छति । आत्मनो दृष्टिः न परदारेषु पतेत् इति सः आत्मनः चक्षुषी संयच्छति । रमेशः नूतनं गृहं निर्मातुं उ च्छति ।

Some verbs appear similar, but not so in some senses and moods.

दा - (to give) in लट्, लङ्, विधिलिङ् - and लोट् will change to यच्छ (ie) यच्छति अयच्छेत् यच्छेत् यच्छतु etc., in future tense (लृट्) दास्यति and in लिट् - ददौ । यम् - (to control) root, also becomes, यच्छति, अयच्छत्, यच्छेत्, यच्छतु - but in लृट् - it is यंस्यति, लिट् - ययामः

Translate into Sanskrit –

1. Where does Ganga originate from?
2. I experience the consequence of the action.
3. Ramesh defeats Vijayan in the competion.
4. My daughter-in-law complaints to my son about what has happened.
5. She sings sweetly.
6. He feels sad about what had happened.
7. Rama wanders (walks) in the forest along with Sita.
8. You utter (chant) the slokas very clearly.
9 Kindly serve the teacher politely.

10. Control your mind.
11. Raghu performs the job with the advise of the teacher.
12. He will give you money.
13. You may give him food.
14. She sings the Raga Bhairavi sweetly.
15. He alone will win everywhere – this news spreads everywhere.
16.Mother wails thinking about his son.

★★★

## पञ्चदशः पाठः - **Lesson 15**

### अभिज्ञान शाकुन्तलम् (संक्षेपः) -२

(स्थानम् - कण्वस्य आश्रमः। तस्य अन्तः वृक्षवाटिका। कण्वेन वर्धिता कन्या शकुन्तला तस्याः सख्यौ च। कण्वं महर्षिं सा पितरं पश्यति। ताः संभूय वृक्षाणां सेचनं कुर्वन्ति। दुष्यन्तः वृक्षेण अन्तरितः ताः पश्यति)

अनसूया - शकुन्तले ! तातस्य कण्वस्य त्वं प्रिया सुता। त्वत्तोऽपि प्रियतराः इमे वृक्षाः। अतः सुकुमारीं अपि त्वां वृक्षसेचने नियोजयति।

शकुन्तला - न केवलं तातस्य नियोगः। ममापि सोदरेष्विव स्नेहः एतेषु।

दुष्यन्तः - कथं इयं सा कण्वदुहिता? पादपान्तरितः विस्रब्धं पश्यामि। सरसिजं शैवलेनापि रम्यम्। चन्द्रः कलङ्केनापि रम्यः। इयं वल्कलेनापि मनोज्ञा। स्वभावतः मधुराणां आकृतीनां सर्वं मण्डनं नाम।

शकुन्तला - प्रियंवदे ! पश्य ! एषः केसरवृक्षः पल्लवैः मां आह्वयति अङ्गुलीभिरिव। गच्छामि।

प्रियंवदा - शकुन्तले ! तत्रैव त्वं मुहूर्तं तिष्ठ !

शकुन्त्तला - किंनिमित्तम् ?

प्रियंवदा - एकाकी केसरवृक्षः । त्वं लतेव दृश्यसे । त्वया सः लतासनाथः भवति ।

शकुन्तला - छिः ! अपेहि ।

अनसूया - शकुन्तले ! नवमालिकां विस्मृतासि । एषा बालसहकारस्य नववधूः । तव प्रियतमा किल ।

शकुन्तला - कथं विस्मरामि ? (लतां उपेत्य दृष्ट्वा) अनसूये ! उचिते काले पादपेन व्यतिकरः संवृत्तः ।

प्रियंवदा - अनसूये ! शकुन्तला किमर्थं वनज्योत्स्नां पश्यति इति किं जानासि ?

अनसूया - न खलु विभावयामि ।

प्रियंवदा - वनज्योत्स्ना अनुरूपेण पादपेन सङ्गता । एवं नाम अहमपि....!

शकुन्तला - एषः तव आत्मगतः मनोरथः ।

दुष्यन्तः- (संलापं श्रुत्वा) अपि नाम इयं कुलपतेः असवर्णक्षेत्रे जाता? (मधुकरः शकुन्तलां अभिगच्छति)

शकुन्तला - (ससंभ्रमं) अयि अहो! सलिलस्य सेकेन संभ्रान्तः मधुकरः मां अभिगच्छति। परित्रायेथां परित्रायेथाम्। (इतस्ततः धावति)

सख्यौ - (सहेलं) के आवां परित्रातुम् ? दुष्यन्तं आक्रन्द । राजा हि रक्षति तपोवनानि ।

दुष्यन्तः - (सहर्षं) अयं एव अवसरः आत्मानं दर्शयितुम्। (निर्गत्य, समीपे उपसृत्य) कः कः, अत्र भोः ? कोऽयं अविनयं आचरति तपस्विकन्यासु? (सर्वाः राजानं दृष्ट्वा संभ्रान्ताः ।)

अनसूया - आर्य ! इयं नौ प्रियसखी शकुन्तला। सा मधुकरेण उपद्रुता।

दुष्यन्तः (शकुन्तलां दृष्ट्वा) भवति ! अपि तपो वर्धते? (शकुन्तला ससाध्वसं अवनतमुखी तिष्ठति।)

अनसूया - स्वागतं आर्यस्य। उपविशतु आर्यः। हला शकुन्तले ! गच्छ उटजम्। फलं अर्घ्यं उपाहर। इदं पादोदकं भविष्यति। (सेचनघटं दर्शयति)

दुष्यन्तः - भवतीनां सूनृतया गिरा कृतं आतिथ्यम्।

प्रियंवदा - तर्हि अस्यां वेदिकायां उपविश्य विश्राम्यतु आर्यः।

दुष्यन्तः - यूयमपि वृक्षाणां सेचनेन श्रान्ताः। उपविशत।

प्रियंवदा - (अनसूयायाः कर्णे) अनसूये ! कः एषः, मधुरं प्रियं आलपति।

अनसूया - ममापि कौतूहलम्। पृच्छामि। (राजानं विलोक्य) आर्य ! भवतः मधुरः स्वभावः मां मन्त्रयते। आर्यस्य कतमो राजवंशः ? को देशः ? किमर्थं तपोवनं आगन्तुं प्रयासः ?

दुष्यन्तः - (क्षणं विचिन्त्य) पौरवेण राज्ञा नियुक्तः अहं, आश्रमवासिनां क्षेमदर्शनाय अगतः।

(शकुन्तला दुष्यन्तं पश्यति।)

सख्यौ - (उभयोः आकारं दृष्ट्वा) यदि अ तातः अत्र भवेत् ?

शकुन्तला - (सरोषं) किं भवेत् ?

सख्यौ - इयं अतिथिविशेषं उचितं संभावयिष्यति।

शकुन्तला - जानामि। किमपि हृदये कृत्वा वदथः। न वां वचनं श्रोष्यामि।

दुष्यन्तः - सख्यौ ! वामपि भवत्योः सखीं प्रति किं ित् पृच्छामः।

सख्यौ - पृच्छतु आर्यः।

दुष्यन्तः - भगवान् कण्वः ब्रह्मचारी इति प्रसिद्धम्। इयं सखी कथं तस्य आत्मजा?

अनसूया - कौशिकः राजर्षिः अस्याः जनकः। तेन उज्झितायाः अस्याः संवर्धनादिभिः कण्वः पिता।

दुष्यन्तः विशेषतः श्रोतुं इच्छामि।

प्रियंवदा - कौशिकः घोरं तपः चचार। देवानां तस्मिन् शङ्का अजायत। मेनका तपसो विघ्नाय प्रेषिता। तस्याः उन्मादकं रूपं प्रेक्ष्य... (लज्जया विरमति)

दुष्यन्तः - अवगच्छामि। अप्सरसो जाता एषा। उचितं नाम तत्। न सौदामिनी वसुधातलात् उदेति।

(शकुन्तला अधोमुखी तिष्ठति। राजा तामेव पश्यति।)

प्रियंवदा - (राजानं प्रति सस्मितं) किं पुनरपि वक्तुकामः इव आर्यः।

दुष्यन्तः - सम्यक् उपलक्षितं भवत्या। सख्याः वैखानसं व्रतं किं आ प्रदानात्? उत अत्यन्तमेव?

प्रियंवदा - अयं जनः धर्माचरणे परवशः। गुरोः पुनः अनुरूपाय वराय प्रदाने सङ्कल्पः।

दुष्यन्तः - (मनसि) हृदय! साभिलाषं भव। सन्देहस्य निर्णयः जातः। यत् अग्निं आशंकसे, तत् स्पर्शक्षमं रत्नम्।

शकुन्तला - अनसूये। अहं गमिष्यामि।

अनसूया - किंनिमित्तम्?

शकुन्तला - प्रियंवदा असंबद्धं प्रलपति। तदेतत् आर्यायै निवेदयामि।

अनसूया - न युक्तं अतिथिं उज्झित्वा गन्तुम्।

(शकुन्तला प्रस्थिता। प्रियंवदा उत्थाय तां वारयति)

प्रियंवदा - द्वे वृक्षसेचने मे धारयसि। एहि आत्मानं मोचय। ततः गच्छ।

दुष्यन्तः - इयं अतीव श्रान्ता। अहं एनां अनृणां करोमि। (इति अंगुलीयं ददाति। तत्र दुष्यन्तः इति नामाक्षराणि दृष्ट्वा परस्परं अवलोकयतः। आश्रमद्वारि कोलाहलः श्रूयते)

अनसूया - आर्य! वनगजवृत्तान्तेन संभ्रान्ताः वयम्। उटजं गच्छामः।

दुष्यन्तः - गच्छन्तु भवत्यः। आश्रमपीडा यथा न भवति, तथा वयमपि यत्नं कुर्मः। मा भैष्ट। (सर्वे उत्तिष्ठन्ति। सख्यौ गच्छतः।)

शकुन्तला - (क्षणं विलम्ब्य) अनसूये! क्षणं तिष्ठ। कुशसूच्या विद्धं चरणं अहं शोधयामि। (इति दुष्यन्तं पश्यन्त्येव निष्क्रान्ता।)

दुष्यन्तः - (शकुन्तलां पश्यन्) इदानीं नगरगमने मे औत्सुक्यं मन्दम्। शकुन्तलाव्यापारात् आत्मानं निवर्तयितुं न शक्नोमि। किं करोमि? (यवनिका परिवर्तते।)

Note:– सन्धिः - त्वत्तः + अपि, सोदरेषु + इव, शैवलेन + अपि, कलङ्केन + अपि, वल्कलेन + अपि, अङ्गुलीभिः + इव, लता + इव, विस्मृता + असि। कः + अयं, कतमः + राजवंशः, कः + देशः, अप्सरसः + जाता, वक्तुकामः + इव।

तातः father. It is also used to persons who are respectable, वर्धिता - nourished, संभूय - gathering, अन्तरितः - hidden, त्वत्तः अपि - more than you, त्वत् - युष्मद् शब्दस्य पञ्चमी - एकवचनम्। तः तसिल् अव्ययम्। तः - denotes the 5th case which is indeclinable, रामात् - can be written

as रामतः, ग्रामात् - ग्रामतः, नगरात् - नगरतः, भाषणात् - भाषणतः - These are indeclinable. सुकुमारी - graceful woman. वृक्षसेचनं - watering the plants, नियोजयति - engages, नियोगः - order, सोदरः - brother, कण्वदुहिता - daughter of, kanva, पादपान्तरितः - hidden behind a tree, विस्रब्धं - (indec) with trust, वल्कलं - bark dress, शैवलं - moss, मनोज्ञा - attractive, स्वभावतः-naturally, केसरवृक्षः = The punnaga tree, मण्डनं - adornment, पल्लवं - tender leaf, एकाकी - solitary (all alone), लतासनाथः - in company with the creeper, विस्मृतासि - you have forgotten, नवमालिका - jasmine, बालसहकारः - Young mango sapling, नववधूः - new bride, पादप व्यतिकरः - union with tree, संवृत्तः - happened, वनज्योत्स्ना - The name given by Shakuntala for the Jasmine creeper; विभावयामि - I imagine आत्मगतं with in himself, कुलपतिः - The head of 10,000 disciples; असवर्ण क्षेत्रं - different caste, अपि नाम स्यात् = May be; ससंभ्रमं - with excitement, सलिलसेकः = watering; संभ्रान्तः = agitated; मधुकरः - honey bee, परित्रायेथां - both of you may save, सख्यौ = Friends; के आवां = who are we?; अवसरः - chance, कः कः अत्र भोः = who is there ?; अविनयः- ill-behaviour; उपद्रुता - was troubled, तपः = penance; वर्धते = grows, ससाध्वसं - with fear, उपनत = bent; उटजं - the hut, अर्घ्यं = oblation; सूनृतया गिरा - with the truthful & pleasant word, आतिथ्यं - hospitality, सप्तपर्णवेदिका - the seat underneath the saptaparna tree, विश्राम्यतु - relax, कौतूहलं - curiosity,

मन्त्रयते - makes me talk, कतमः = ಯಾವ? प्रयासः = labour; पौरवेण राज्ञा - by the king of Puru dynasty, नियुक्तः - appointed, क्षेमदर्शनाय - for seeing the welfare, आकारं = appearance; सरोषं - with anger, अतिथिविशेषं = The special guest; हृदये कृत्वा - keeping in mind, न श्रोष्यामि = I will not hear; तदात्मजा - his dauthter, उज्झिताः - deserted, संवर्धनादिभिः - by breeding etc., चचार - performed विघ्नाय - for causing obstacles, प्रेषिता - was sent, उन्मादकं - maddening or intoxicating, प्रेक्ष्य - observing, सौदामिनी - lightning, वक्तुकामः- desiring to talk, उपलक्षितं - was observed, वैखानसं व्रतं - the Vaikhanasa discipline, आ प्रदानात् - till the marriage, अत्यन्तं = Till the end; अयं जनः = This soul; परवशः - dependant, साभिलाषं भव - be hopeful, सन्देहनिर्णयः - clearance of the doubts, यत् अग्निं ...whatever you think or fear for fire is a touchable gem, असम्बद्धं - unconnected; उज्झित्वा = having abandoned; वारयति = preventing; आत्मानं मोचय - release yourself, अनृणां - relieved from debts, वचनेनैव = by telling alone / by the words alone; किं अङ्गुलीयेन - what with the ring? मृगयाविहारी - interested in hunting, प्रत्यासन्नः - being close to, स्यन्दनं - chariot, अवहिताः - attentive; कुशसूच्या विद्धं - Pocked with a sharp grass शोधयामि - purify, न शक्नोमि = I am unable to; व्यापारात् - from activity, निवर्तयितुं = to turn from; मा भैष्ट - don't be afraid, निष्क्रान्ता - got out, परिवर्तते - changes.1. Give word to word meaning to the conversation given above.

2. Answer The following in Sanskrit

दुष्यन्तः शकुन्तलां कथं वर्णयति ?

तेन दत्ताः शकुन्तलायाः उपमाः काः ?

शकुन्तला वृक्षान् सिञ्चन्ती कस्मात् बिभेति ?

भीता सा किं अकरोत् ?

राजा कथं आत्मानं ताभ्यः निवेदयति ?

3. आंगल्यां इमानि वाक्यानि अनुवदत।

आत्मनः यौवनं उपालभस्व।

एकाकी केसरवृक्षः त्वया लतासनाथः भवति।

उचिते काले पादपेन व्यतिकरः संवृत्तः।

न खलु विभावयामि।

अयं एव अवसरः आत्मानं दर्शयितुम्।

भवतः मधुरः स्वभावः मां आमन्त्रयते।

न वां वचनं श्रोष्यामि।

यदि अ अत्र तातः भवेत्।

प्रियंवदा असंबद्धं प्रलपति।

यत् अग्निं आशङ्कसे, तत् स्पर्शक्षमं रत्नम्।

१. दुष्यन्तः शकुन्तलां कथं वर्णयति?

तेन दत्ताः शकुन्तलायाः उपमाः काः?

शकुन्तला वृक्षान् सिञ्चन्ती कस्मात् बिभेति?

भीता सा किं अकरोत्?

राजा कथं आत्मानं ताभ्यः निवेदयति?

२. तमिलि इमानि वाक्यानि अनुवदत ।

आत्मनः यौवनं उपालभस्व ।

एकाकी केसरवृक्षः त्वया लतासनाथः भवति ।

उचिते काले पादपेन व्यतिकरः संवृत्तः ।

न खलु विभावयामि ।

अयं एव अवसर; आत्मानं दर्शयितुम् ।

भवतः मधुरः स्वभावः मां आमन्त्रयते ।

न वां वचनं श्रोष्यामि ।

यदि अद्य अत्र तातः भवेत् ।

प्रियंवदा असंबद्धं प्रलपति ।

यत् अग्निं आशङ्कसे, तत् स्पर्शक्षमं रत्नम् ।

4. Give the case, person and numbers of the following words.

शकुन्तले, कुलपतेः, सरसिजं, आवां, आर्यस्य, भवतीनां, मधुकरेण, अनुरूपाय, साभिलाषं, प्रलपति, वारयति,, आशङ्कसे, उदेति, अवलोकयतः, भवत्यः, राजवंशे, उन्मादकं, विरमति, आहो, प्रदाने।

★★★

## षोडशः पाठः Lesson - 16

### सुरेशः - रमेशश्च।

सुरेशः - वयं त्रयः अधुना पत्राणि प्रेषयितुं सन्निहितं पत्रालयं गच्छामः । एतत् महानगरं किल ? पत्रप्रेषणे अधिकृताः पञ्च पत्रप्रेषणालयाः अत्र सन्ति । तत्र त्रयः उपपत्रालयाः । द्वौ प्रधानपत्रालयौ । तन्त्रीप्रेषणायापि एषु पृथक् व्यवस्था अस्ति। प्रधानतन्त्रीप्रेषणालयः कश्चन नगरोपान्ते पृथगेव

अस्ति । सन्निहिते अस्मिन् पत्रालये सेवापराः सर्वे आपण्डितपामरं, आदरिद्रधनिकं जनानां हितं आचरन्ति। चीटिका, प्रादेशिक पुटकं, पुटकं, वैमानिकपुटकं, पत्रमुद्रिकाः अत्र विक्रीयन्ते। धनादेशप्रेषणाय रेखापत्रं दीयते अल्पेन मूल्येन। गच्छामो वा ?

रमेशः - मयापि पत्राणि प्रेषणीयानि। त्वरया काचन वार्ता प्रेषणीया। अतः तन्त्रीद्वरा सा प्रेष्यते।

सुरेशः - यदि तत्र त्वराऽधिका, साक्षादेव दूरभाषिण्या भाषितुं शक्नुमः, यदि निवे स्य संकेतिनो निकटे, तद्गृहे वा दूरभाषिणी वि ते। तत्रायं विशेषः, निवे स्य सकाशात् प्रतीक्षितस्य उत्तरस्य प्राप्तिरपि तदैव भवित्री।

रमेशः - दूरभाषणे क्रमेण अभिवृद्धिः जाता, प्रतिक्षणं जायमाना च दृश्यते।

सुरेशः - अद्यत्वे त्वरा अधिका सर्वत्र। प्रेषितं उद्दिष्टस्य हस्ते दत्तं वा इति ज्ञानाय पञ्जीकरणं क्रियते। धनादेशद्वारा, तन्त्रीधनादेशद्वारा धनं प्रहातुं शक्यते । जनतायाः सेवां सम्यक् आचरन्ति ते प्रतिक्षणं अनुसन्धानेन । त्वराप्रेषणसेवा च चलति, अन्ये ुरेव यथा प्रेषितं पत्रं उद्दिष्टेन लभ्येत।

रमेशः - यदि तत्र अधिकृताः सेवायां रताः भवेयुः सर्वेषां प्रगतौ तैः बहु उपकृतं स्यात्।

**सन्निहितं** - placed near, **पत्र प्रेषणालयः पत्रालयः** - post office, **उपपुत्रालयः** = Sub Post Office; **तन्त्री** - telegram, **नगरोपान्ते** - in the outskirts of the city, **व्यवस्था** - arragement, **आपण्डितपामरं** - from the learned to the illiterate, **आदरिद्रधनिकं** - from poor to rich, **चीटिका** - post card, **प्रादेशिकपुटं** - inland letter, **पुटकं** - envelope,

वैमानिकपुटकं - air mail, पत्रमुद्रिका - stamp, धनादेशः - money order, रेखापत्रं - form, त्वरा - speed; दूरभाषिणी = Telephone; संकेतः - address, संकेती - addressee, निवेद्यः - to be informed, प्रतीक्षितं उत्तरं - expected reply, भवित्री - will happen, पञ्जीकरणं - registration, प्रहातुं - send, अनुसन्धानं - the effort, research प्रगतिः - progress, अन्येद्युः - next day.

Sandhi: पृथक् + एव, गच्छामः + वा, त्वरा + अधिका, तत्र + अयं, प्राप्तिः + अपि, प्रतीक्षितस्य + अत्तरस्य।

---*---

## सप्तदशः पाठः - Lesson - 17

### धातवः उपसर्गाश्च (२)

9. सिद्ध्यति - is fulfilled, is accomplished, प्रसिद्ध्यति - becomes famous
10. तुष्यति सन्तुष्यति - becomes happy.
11. शुद्ध्यति - विशुद्ध्यति - becomes pure.
12. अस्यति - throws, अपास्यति - throws away, casts off
13. श्राम्यति - becomes tired, विश्राम्यति - takes rest परिश्राम्यति - works hard.
14. भ्राम्यति - wanders, परिभ्राम्यति - roams here and there.
15. मा ति - is intoxicated, प्रमा ति- fails due to carelessness, उन्मा ति - becomes mad.
16. श्लिष्यति - hugs, संश्लिष्यति - embraces, विश्लिष्यति - gets

separated.

17. नह्यति - ties, सन्नह्यति - getting ready (for a war etc.,).

Translate the following into English

कार्याणि उद्यमेन सिद्ध्यन्ति, न मनोरथैः।

गङ्गा - यमुना - सरस्वतीनां सङ्गमः त्रिवेणी इति प्रसिद्ध्यते।

ईश्वरः भावेन सन्तुष्यति।

स्वर्णं पुनः पुनः अग्नौ तप्तं शुद्ध्यति।

कृषकाः आमध्याह्नं केदारेषु परिश्राम्यन्ति।

कश्चित्कालं तरुतलेषु विश्राम्यन्ति।

सुरापाः मधुपानेन माद्यन्ति। कर्तव्येषु प्रमाद्यन्ति च।

लता वृक्षं श्लिष्यति।

क्षीरं पयसा संश्लिष्यति।

मथनेन नवनीतं दध्नः विश्लिष्यति।

गोपालः धेनुं रज्ज्वा नह्यति।

वीराः कवचं बध्वा युद्धाय सन्नह्यन्ति।

तप्तं - making hot, आमध्याह्नं - till midday तरुतलेषु - underneath the tree, सुरापाः - drunkards

18. पृच्छति - asks, आपृच्छते (atma) – bids farewell, परिपृच्छति – Asks again & again to clear doubts.

19. सृजति - creates, संसृजति - mixes or merges with, विसृजति - getting separated from or throws.

20. मज्जति - निमज्जति - immerses or plunges, उन्मज्जति - getting up after plunging.

21. इच्छति - wishes अन्विच्छति - reaches or finds out, प्रतीच्छति - receives, प्रेच्छति - sends.
22. मृशति - Pats, विमृशति - thinks deeply, परामृशति - analyses.
23. लिखति - writes, विलिखति - scratches, उल्लिखति - guesses or describes.
24. गिरति - गिलति - swallows, उद्गिरति - throws out. ejects, belches
25. क्षिपति - throws, प्रक्षिपति - throws inside, संक्षिपति - briefs, विक्षिपति - scatters, उत्क्षिपति - throws, अधिक्षिपति - scoldes, निक्षिपति - keeps safe, आक्षिपति - accuses, प्रतिक्षिपति - replies, अवक्षिपति - indicates, परिक्षिपति - goes around or surrounds,
26. दिशति - gives, सन्दिशति - sends message, उपदिशति - preaches, अपदिशति - says excuses, gives false reasons, व्यपदिशति - tells by name, निर्दिशति - points out, निदिशति - orders, उद्दिशति - intends, आदिशति - orders,
27. सिञ्चति, निषिञ्चति - sprinkles with, परिषिञ्चति - sprinkles water around, अभिषिञ्चति - bathes, sprinkles water over and around.
28. मुञ्चति - releases, निर्मुञ्चति - (the snake) leaves outer skin, separates from oneself, प्रतिमुञ्चति, आमुञ्चति - wears dress, jewels, armour etc. अवमुञ्चति - removes.

Translate into English

शिष्याः गुरुं संशयान् पृच्छन्ति।

रामः वनं गमिष्यन् दशरथं आपृच्छत।

वाल्मीकिः नारदं पर्यपृच्छत्।

ईश्वरः जगत् सृजति।

ऊर्णनाभिः जालं सृजति।

तिलं तण्डुलेन संसृजति।

बालः शय्यायां मूत्रं विसृजति।

शिला जले मज्जति।

न्युब्जितोऽपि कन्दुकः जलात् उन्मज्जति।

सर्वे वयं सुखमिच्छामः, न तदुचितं प्रयतामहे।

सुग्रीवेण प्रेषिता वानराः सीतां अन्वैच्छन्। (अनु+ऐच्छन्)

माता बालस्य देहं वात्सल्येन मृशति। (परिमृशति)

विद्यार्थी तस्य प्रश्नस्य उत्तरं चिराय विमृशति।

वैज्ञानिकाः इदानींतनं सूर्यग्रहणं बहुधा परामृशन्। (परा + अमृशन्)

अंगुल्या भूमिं मा विलिख।

जनाः निर्वाचनफलं बहुधा उल्लिखन्ति।

शिशोः हस्ते गोलीं मा देहि। स तां गिलेत्।

बालः पीतं एरण्डतैलं उदगिरत्।

तडागे उपलान् मा क्षिप (मा प्रक्षिप)।

कूर्मः स्पृष्टः अङ्गानि संक्षिपति।

कविः वक्तव्यं संक्षिपति।

बन्दूकः स्फोटान् विक्षिपति।

बालाः कन्दुकानि उत्क्षिपन्ति।

अ त्वे जननेतारः परस्परं अधिक्षिपन्ति।

रामः आभरणानि धनागारे गुप्तपेट्यां निक्षिपति।

कृष्णः रामेणोक्तं आक्षिपति। रामः तं प्रतिक्षिपति।

वानरः मालां अवक्षिपति।

सीता स्वं आशयं रामाय उपक्षिपति।

योधाः अभिमन्युं परिक्षिपन्ति।

रामः राज्यं भरताय दिशति।

यक्षः प्रियां मेघद्वारा सन्दिशति। तत्काव्यं "मेघसन्देशः"।

कृष्णः क्रिडार्थं कक्ष्यातः बहिर्गन्तुं उद्दिशति। तदर्थं गुरोः समक्षं अपदिशति।

रामः समुद्रतीरे नवसु पाषाणेषु नव ग्रहान् अपूजयत्। जनाः तत् स्थलं 'नवपाषाणं' इति व्यपदिशन्ति।

पुष्पकेण प्रत्यागच्छन् रामः सीतायै अत्र सेतुः, अत्र किष्किन्धा, इतः शबर्याश्रमः, इतः पञ्चवटी" इति निरदिशत्।

रामः भरतं अयोध्यां गन्तुं न्यदिशत्।

स किं उद्दिशतीति स्पष्टं न अहं जाने।

रामः सुमन्त्रं अयोध्यां गन्तुमादिशत्।

उद्यानपालः वृक्षेभ्यः जलं सि ाति। (निषिञ्चति)

धारासारः गिरिकूटं परिषिञ्चति।

वसिष्ठः रामं अभ्यषिञ्चत्।

सर्पः जीर्णां त्वचं तदा तदा निर्मुञ्चति। तस्य निर्मोक इति नाम।

सीता कण्ठात् मुक्ताहारं अवामुञ्चत्। रामेण अनुमता सा मारुतये तं व्यतरत्।

29. कथयति – tells, सङ्कथयति - chatters.

30. गणयति - counts, विगणयति - ignores.

31. अर्थयति -requests, प्रार्थयति - requests politely,

समर्थयति - proves.

Translate in English:-

रामाय सीतायाः वृत्तं मारुतिः अकथयत्।

कृष्णः कुचेलश्च एकासने उपविष्टौ चिरं समकथयताम्।

विनायकः स्कन्दस्य अक्षीणि एकं द्वे इति अङ्गुलीभिः गणयति।

मातुः अङ्के संस्थिता बाला भगिनीं विगणयति।

आतुरः भिषजं चिकित्सां अर्थयति।

माणवकः परीक्षायां विजयं दातुं देवं प्रार्थयति।

पृथिवी सूर्यं परिभ्रमति। इमं अर्थं उपाध्यायः हेतुभिः समर्थयति (न्युब्जितोऽपि - though immersed, निर्वाचनफलं - election result, एरण्डतैलं - castor oil, बन्दूकः - pistol, स्फोटः - crackers and bullet, व्यतरत् - distributed or gave, धनागारः- bank, आशयः - idea, धारासारः - water falls, गिरिकूटं - side or slope of mountain, गुप्तपेटी - safe box, पाषाणः -rock. अङ्के - on the lap, आतुरः - sick, भिषक् = doctor, विजयः - victory पृथिवी - earth, अर्थः - money or matter.

* * *

## अष्टादशः पाठः - Lesson - 18

### भोजः कविश्च।

भोजराजः अतीव कलारसिकः। कविताप्रियः। अतः कवयः सदा तस्य सभां आगत्य स्वचातुर्यं प्रकटयन्ति स्म। सोऽपि तेषां चमत्कारपूर्णां कवितां श्रुत्वा पारितोषिकं अयच्छत्।

एकस्मिन् दिने दौवारिकः न्यवेदयत् ''कविः कश्चित् भवन्तं द्रष्टुं आगतः'' इति। राजा ''तं सादरं प्रवेशय'' इत्याज्ञापयत्। अथ दौवारिकेन प्रवेशितः कविः राजानं जयाशिषा वर्धयित्वा आसने उपविवेश।

राजा -विद्वन्! को विशेषः?

कविः -अ त्वे शिवः नास्ति। नामशेषः जातः।

राजा -कथमेतत्? ''ईश्वरः नास्ति'' इति कथम्?

कविः -तस्यार्धं नारायणेन हृतम्।

राजा -कथमेतत्?

कविः -तस्य देहार्धं हृत्वा नारायणः ''शंकरनारायणः'' इति प्रसिद्धः।

राजा -(सविस्मयं) अथ अवशिष्टं देहार्धम्?

कविः -तत् गिरिजया हृतम्।

राजा -गङ्गा आसीत् किल तस्य शिरसि?

कविः -सा दुः खिता समुद्रे पतिता।

राजा -चन्द्रकला कुत्र गता?

कविः -सा स्वर्गं (आकाशं) गता।

राजा -कष्टं कष्टम्। तस्य भूषणं वासुकिः कुत्र गतः?

कविः -सः पातालं प्रविष्टः।

राजा -शंकरः सर्वज्ञः किल? ''ज्ञानं महेश्वरात् इच्छेत्'' इति खलु जना वदन्ति! सर्वेषां ईश्वरः आसीत्। इदानीं तत् ज्ञानं ईश्वरत्वं च कुत्र गतम्?

कविः -तदेव वक्तुं आगतः। सर्वज्ञत्वं अधीश्वरत्वं च त्वां अगमत्। त्वां विना कः सर्वज्ञः? को वा सर्वेश्वरः (प्रभुः)?

राजा -कवे! चमत्कारपूर्णा ते वाणी। कथय तस्य भिक्षाटनं क्व गतम्? तत् न कदापि तस्मात् अपगच्छति।

कविः -किं न पश्यसि ? भिक्षाटनं मां आगमत्।

राजा -साधु साधु। कवितां कथय !

कविः कवितां अपठत्।

अर्धं दानववैरिणा गिरिजयाऽप्यर्धं शिवस्याहृतं
देवेत्थं जगतीतले पुरहराभावः समुन्मीलति।
गङ्गा सागरं अम्बरं शशिकला नागाधिपः क्ष्मातलं
सर्वज्ञत्वं अधीश्वरत्वं अगमत् त्वां, मां च भिक्षाटनम्॥

भोजराजः महता पारितोषिकेन तं अतोषयत्।

चातुर्यं - cleverness, चमत्कारपूर्णा - full of poetic beauty which is imaginative, पारितोषिकं - gift, दौवारिकः - gate keeper, सादरं - with respect, प्रवेशय - give entry, प्रवेशितः - who was sent inside, वर्धयित्वा - after greeting, अ त्वे - now a days, नामशेषः - surviving only in name, only the name left out, सविस्मयं - amazingly, अवशिष्टं - remnant, देहार्धं - half of the body, गिरिजा = பார்வதியால்; शोचनीयः - pitiable, दानववैरिणा - by the enemy of demons – by Lord Narayana, गिरिजया - by Parvati, अर्धं - the half, आहृतम् - was stolen, इत्थं - thus, जगतीतले - on this earth, पुरहराभावः - absence of Shiva, समुन्मीलति - manifests, सागरः - ocean, शशिकला - the digit of the moon, अम्बरं - sky, नागाधिपः - the leader of snakes, क्ष्मातलं - the nether world, सर्वज्ञत्वं - very omniscience, अधीश्वरत्वं - all power to rule, भिक्षाटनं - roaming for alms; मां = என்னையும்; अगमत् = reached; देह + अर्ध =

देहार्धम् । गिरिजया + अपि + अर्धं = गिरिजयाप्यर्धं, शिवस्य + आहतं = शिवस्याहतम्, देव + इत्थं = देवत्थम् ।

Translate this lesson into English.

★★★

# एकोनविंशः पाठः - Lesson - 19

## सन्धिः - (Sandhi)

अच् सन्धिः - The combination of Vowels

A Sandhi occurs when two vowels following each other or when two join. When two syllables join, there can occur a change. Sometimes there may not be a change.

When two vowels join, (i.e.) the last syllable of the first word and the first syllable of the second word, both are vowels, combination takes place, and this is called अच् सन्धिः । The same way the combination of consonants is called हल् सन्धि ।

In several places Sandhi takes place. Another place where सन्धि occurs is when the base and suffix join, like हरि + ए = हरये । when a preposition joins with a verb then again is a combination. उप + अगच्छत् = उपागच्छत्. In Samasa when two component words join, a Sandhi can occur. राम + अयनम् - रामायणम्. These Sandhis are permanent. In certain places, when two independent words join, the Sandhi occur or in certain cases it may not also happen. There is a beauty when sentences are formed joining sandhis.

सन्धिरेकपदे नित्यो नित्यो धातूपसर्गयोः ।
समासेऽपि च नित्यः स्यात्स चान्यत्र विवक्षया ॥

Sandhis are of two types: (1) स्वरसन्धिः or अच्सन्धिः (2) व्यञ्जन सन्धिः or हल् सन्धिः

The sandhi of vowels are of seven types. दीर्घसन्धिः वृद्धिसन्धिः, यण्यन्धिः अयवायावसन्धिः पूर्वरूपसन्धिः, पररूपसन्धिः and the one which doesn't undergo any change even after combination which is प्रगृह्यम्.

दीर्घसन्धिः

The vowels अ इ उ ऋ ऌ in short and long forms when they join with the ame vowels (short or long) (सवर्ण) one long vowel of the same kind will replace, the last and the first vowel. This sandhi is more likely in अ इ and उ syllables, less in ऋ and least in ऌ. The rule of Sanskrit grammar is अकः सवर्णे दीर्घः । अकः is the Pratyahara of, अइउण् ऋऌक् ।

Examples:-

१.अ + अ, अ + आ, आ + अ, आ + आ =आ

२. इ + इ, इ + ई, ई + इ, ई + ई = ई

३. उ + उ, उ + ऊ, ऊ = उ, ऊ + ऊ = ऊ

४. ऋ + ऋ, ऋ + ॠ, ॠ + ऋ, ॠ + ॠ = ॠ

१.अ + अ=आ=(उदाहरणं) अत्र + अस्ति=अत्रास्ति।

धर्म + अर्थं = धर्मार्थं। शश + अङ्कः = शशाङ्कः ।

राम + अयनं = रामायणम्।

२. अ+आ=आ। (उदाहरणं) अत्र + आगच्छ = अत्रागच्छ। हिम + आलयः = हिमालयः। शिष्ट + आचारः =शिष्टचारः।

३. आ + अ = आ। (उदाहरणम्) विद्या + अभ्यासः= विद्याभ्यासः। विद्या + अधिपतिः = विद्याधिपतिः। विद्या + अर्थी = विद्यार्थी।

४. आ + आ = आ। (उदाहरणम्) विद्या + आरम्भः = विद्यारम्भः। विद्या + आलयः = विद्यालयः। क्रिडा + आनन्दः = क्रिडानन्दः। दया + आनन्दः= दयानन्दः।

५. इ + इ = ई (उदाहरणम्) मुनि + इन्द्र = मुनीन्द्रः। कवि + इच्छा = कवीच्छा। अति + इच्छा = अतीच्छा।

६. इ + इ = ई (उदाहरणम्) गिरि + ईशः = गिरीशः। अस्ति + ईश्वरः = अस्तीश्वरः। कवि + ईहा = कवीहा।

७. ई + इ = ई (उदाहरणम्) मही + इन्द्र = महीन्द्रः। गौरी + इह = गौरीह। सती + इति = सतीति।

८. ई + ई = ई (उदाहरणम्) गोरी + ईशः = गोरीशः। लक्ष्मी + ईशः लक्ष्मिाशः। शर्वरी + ईशः = शर्वरीशः।

९. उ + उ = ऊ (उदाहरणम्) स्वादु + उष्णं = स्वादूष्णम्। मधु + उत्तमं = मधूत्तमं। मधु + उपाहर = मधूपाहर। भानु + उदयः = भानूदयः। यदु + उद्वहः = यदूद्वहः।

१०. उ + ऊ = ऊ (उदाहरणं) लघु +ऊर्मिः = लघूर्मिः। स्वादु + ऊष्मलं = स्वादूष्मलं। पटु + ऊहः पटूहः।

११. ऊ + उ = ऊ। (उदाहरणम्) वधू + उद्वाहः = वधूद्वाहः। वधू + उपहारः = वधूपहारः।

१२. ऊ + ऊ = ऊ। (उदाहरणम्) वधू + ऊर्मिला = वधूर्मिला।

१३. ऋ + ऋ = ॠ = (उदाहरणम्) पितृ + ऋणं = पितॄणम्।

sandhis with ऋ+ॠ, ॠ+ॠ, ऌ+ॡ, ॡ+ॡ, are very very rare.

Excercise - combine split

राम + आगच्छ। हरि + ईशः। गुरु + उदयः। वट + अरण्यम्। शची + इयेष। करोतु + ऊढः। कटु + उष्णः। स्वादु + उपहारः। मधु + उदकम्। चित्रा + आकृतिः। हिम + अचलः। मन्दर + अद्रिः। महा + आलयः। राजा + आसनं। रुक्मिणी + ईशः। साधु + उक्तम्। विचार्य + आह। राम + आश्रमः। महा + आचार्यः। चिराय + आगतः।

अक्षरादिः। सीतागच्छति। चन्द्रार्कौ। विवेकानन्दः। अत्रागच्छति। ममाचार्यः। तवाग्रे। यदागतम्। उपाहरति। तवापि। विन्धयाचलः। मलयाद्रिः। जानकीति। चित्राकृतिः। यदृच्छया। तवाशयः। साधूक्तम्। महारम्भः। विजयालयः। विनतानयति।

★★★

## विंशः पाठः Lesson - 20

### धातवः उपसर्गाश्च - (३)

**The exceptional forms in Atmanepada** and Parasmai Pada

The roots are of three types 1) आत्मनेपदं, 2) परस्मैपदं, 3) उभयपदं. Certain roots come under परस्मैपदं or

आत्मनेपदं There are very few roots which have both the forms. We have to abide by the grammatical rule for the usage of the roots.

Some roots when they join with the prepositions Atmanepada may change to Parasmaipada and Parasmaipada might change to Atmanepada.

example:- (1) विशति - enters, changes to आ.प. निविशते enters. (2) जयति wins विजयते - wins, पराजयते - fails to winout. (3) तिष्ठति - stands, उपतिष्ठते - Presents himself प्रतिष्ठते - sets, उत्तिष्ठते - tries. But उत्तिष्ठति - gets up, (4) क्रीडति plays following some one. परिक्रीडते आक्रीते - Plays all around, (5) पृच्छति - asks, आपृच्छते - takes farewell, (6) चरति - walks or grazes, सञ्चरति - wanders, स रते - travels by means of vehicles. (7) गच्छति - goes, संगच्छते - fits in well, (most appropriate,) (8) आह्वयति - calls, आह्वयते - challenges for a battle.

Translate into English:-

मार्गे कण्टकः पादे निविशते स्म। (न्यविशत)

इन्दिरागान्धीपक्षः नवानां मध्ये अष्टसु प्रान्तेषु विजयते स्म (व्यजयत)।

रावणः सर्वत्र पराजयत।

भृत्यः स्वामिनं (எஜமானனின் எதிரில்/ எஜமானனிடம் என இங்கு பொருள்படும்) उपतिष्ठते।

रामः काशीं प्रति प्रतिष्ठते।

शिष्टः पठनाय उत्तिष्ठते।

माणवकाः पूर्वेद्युः आरब्धां क्रीडां अनुक्रीडन्ते।

गोः वत्सः मातरं परिक्रीडते।

सर्वे प्रांगणे आक्रीडन्ताम्।

पुत्रः विदेशान् प्रति प्रस्थितः पितरं आपृच्छते।

द्विचक्रेण गोपालः सञ्चरते।

रामेणोच्छक्तं परिस्थित्या सङ्गच्छते।

लक्ष्मणः इन्द्रजितं समरांगणे आह्वयते।



## एकविंशः पाठः Lesson - 21

विद्या विनयाय।

बालः विद्याशालां गच्छति। मार्गस्य मध्ये गुरुणा सह सङ्गच्छते। तौ भाषमाणौ गच्छतः।

गुरुः - बाल! कस्यां कक्ष्यायां पठसि?

बालः - आर्य! तृतीयायाम्।

गुरुः - तात! किमर्थं पठसि? किं ते लक्ष्यम्?

बालः - आर्य! चिकित्सकः भवितुं इच्छामि।

गुरुः - वत्स! तदर्थं कियत् पठनीयं इति जानासि वा?

बालः - जानामि। अन्यूनं नव दश वा वत्सराः श्रद्धया विद्यायाः ग्रहणेन नेतव्याः।

गुरुः - ततः परमपि पद्या सप्त वा वत्सराः भैषज्यस्य शिक्षायै आवश्यका भवन्ति। अ बालोऽसि। किशोरो भवेः। युवा च

भविष्यसि। यौवनस्य मुख्यतमं भागं वि याः ग्रहणे व्ययीकरिष्यसि। को वा लाभः त्वया प्रतीक्षितः ?

बालः - तदेव उन्नतं जीवनं भवेत् इति पितरौ वदतः।

गुरुः - सत्यं वदतः तव पितरौ। विद्या नाम परमं धनम्। अद्य अवकाशो महान् विद्यते। त्वं बुद्धिमानसि। अतः किमपि उपयुक्तं वक्तुं उत्सहे। शृणु बालः बालवि शालायां पठति। तत्र किं जानाति ?

बालः - मातृभाषायाः लिपिं अधिगच्छति। पदानि वाक्यानि लिखति। क्रमेण संख्याः गणितं च अधीते।

गुरुः - ततः परं वयसा परिणतः ज्ञानस्य वर्धनाय प्रौढविद्याशालां प्रविशति। तत्र गणिते, इतरासु भाषासु, लोकचरित्रे, प्रादेशिकचरित्रे, भूगोल-विज्ञाने, खगोलविज्ञाने भौतिके रसायने जीवन-विज्ञाने इति बहुषु ज्ञेयेषु भूयसा परिचयं लभते। क्रमेण केषुचित् विशिष्टेषु विषयेषु अधिकं परिचयं लभते। यत्र तस्य अभिनिवेशः अधिकः, तं विशिष्टपाठ्यत्वेन गृह्णाति। तथा किल ?

बालः - आम् आर्य ! अहमपि तथैव शिक्षां प्राप्तुं इच्छामि।

गुरुः - ततो युवा भवति। कलाशालां प्रविशति।

बालः - आर्य ! कलाशालाः असंख्याः सन्ति। कुत्र पठेयम्? कुत्र पठनाय स्थानं लभ्येत ? कियत् शुल्कम् ? किं मम पितृभ्यां तत् दातुं शक्येत ? तत्र लभ्या शिक्षा किं मां उपकुर्यात् उत्तमं जीवनं प्राप्तुम् ? इति बहवः संशयाः भ्रामयन्ति माणवकं इति मम अग्रजो वदति। किं तत्सत्यम्?

गुरुः - सत्यं भवेत्, यदि माणवकः स्वयमेव प्रयतेत तदर्थे। पितरौ वि ते, तदर्थे चिन्तितुं, युक्तं आचरितुं च। ततः कुतः चिन्ता ?

चिन्ता ? कुतो वा भ्रमः ? अत्रैव किञ्चिद् वक्तुं इच्छामि। "विनयाय विद्या" इति किंचित् आभाणकं त्वया श्रुतं स्यात्। सर्वाः एताः विद्याः, सा च शिक्षा विद्यालयेषु या लभ्यते, तासां एकमेव उद्देश्यं - विनयनं नाम। मार्गे उचिते नयनं, विनयनं भवति। तदर्थमेव शिक्षा, अभ्यासश्च। अभ्यासेन सर्वं वशे भवति। उचितो युक्तो मार्गः न बालेन किशोरेण स्वयमेव सुज्ञेयः। तदर्थं गुरुः मार्गं दिशति। अत एव तस्य नाम देशिकः इति। माता पिता च गृहे, गुरुः वि ालये च तत्र निरताः रात्रिन्दिवं तव मार्गे नयनाय उ ुक्ताः। ते वयसा त्वदपेक्षया ज्यायांसः। वि या अनुभवेन च श्रेयांसः। त्वयि - त्वदर्थे सदा अवहिताः, तव हिताचरणे रताः। अतः तदीयेषु निर्देशेषु त्वया अवहितेन भाव्यम्। तेषां उपदेशेषु अवधानाय, विनयः आवश्यकः। विनये सति विद्या वर्धते। अत एव बाल-विद्याशाला, प्रौढविद्याशाला, कलाशाला, विश्वविद्यालयः इति क्रमेण उन्नतानि विद्यास्थानानि प्रविशसि। तानि उन्नतानि। तत्र प्रवेशाय तव विनतिः आवश्यकी। इतः परं मम ज्ञेयं नास्ति इति चिन्तयसि चेत्, कुतः कलाशालां गन्तुं इच्छसि? उपर्युपरि किमपि वि ते। ततः उपर्युपरि अधीषे। विद्यायाः अन्तः नास्ति। सा सर्वासां विद्यानां अधीश्वरी सरस्वती अ ापि पुस्तकहस्ता विद्याः, वीणहस्ता कलाश्च अधीयाना वर्तते इति वृद्धाः वदन्ति। मया सर्वं ज्ञातं इति अवलेपः भवेच्चेत्, अधीतापि वि ा तिरोभवति, सर्वत्र नासाभङ्गो भवेदपि। अतो विनीतो भव विद्याग्रहणे। विनीतो भव तत्र उपकर्तरि पितरि मातरि गुरौ च।

बालः -आर्य ! साधु अवगच्छामि । मातापि एवमेव मां वदति, उद्बोधयति असकृत् ।

गुरुः - गमने, आगमने, प्रश्ने, उत्तरे, भाषणे, हासे, केलिषु, सेवायां, सत्कारे, सर्वत्रापि विनीतः उचितं व्यवहर। अनुकूलान् भूयो अनुकूलय। प्रतिकूलानपि अनुकूलय सूनृतया मधुरया वाचा। विनयेन विद्यां वर्धय। विद्यया विनयं वर्धय। सर्वत्र सफलो भवेः। उत्तमं जीवनं प्राप्नुयाः। सर्वत्र ते शुभं भवतु। विद्याशाला सन्निहिता। गच्छ पुनर्दर्शनाय।

लक्ष्यं - aim or goal, नेतव्याः- to be guided, किशोरः - a boy of 8-15, व्ययीकरिष्यसि - you'll spend, प्रतीक्षितः - expected, जीवनं -life, उपयुक्तं - useful, उत्सहे - am enthusiastic, परिचयः - familiarity, acquaintance विशिष्टं पाठ्यं - Optional special subject, शिक्षा - training, भ्रामयन्ति - cause disturbance in mind, confuse, विनयनं - guiding thro good path, दिशति - points out, ज्यायान् - older, श्रेयान् - superior, अवहिताः - attentive, निर्देशः - notes, order, instruction, अवधानं - attention, विनतिः विनयः - humility, अधीषे - you are learning, अधीयानः - learner, अवलेपः - haughtiness, नासाभङ्गः - nose-cut, उद्बोधयति - reminds, केलिः - play, सत्कारः - hospitality, अनुकूलय - make favourable, सूनृताः - accommodative, kind, sincere, courteous.

----★----

## द्वाविंशः पाठः - Lesson - 22

अभिज्ञानशाकुन्तलम् - (स`पः) - ३.

तृतीयं दृश्यम्।

(स्थानं-कण्वाश्रमः। दुष्यन्तस्य वयस्यः विदूषकः, मृगयायै प्रस्थितं दुष्यन्तं अनुगच्छन्, वने परिभ्रमणेन नितरां श्रान्तः, वृक्षमूले शयानः, स्वगतं भाषते)

विदूषकः - भो दिष्ट ! मृगयाशीलो राजा। तस्य वयस्यो भवन्नपि अहं इदानीं निर्विण्णः। राजानं अनुगच्छामि। मृगया ! भृगया ! तस्य तत्रैव रतिः। इतो मृगः, ततः शार्दूलः इति मध्याह्नेऽपि अटवीतः अटवीं अटावः। पत्रसङ्करेण कलुषितं कदुष्णं जलं पिबावः। अनियता आहारवेला ! कमपि उपनतं आहारं खादावः। रात्रावपि निकामं शयितुं न शक्नुवः। अ तावत् प्रत्यूष एव प्रबोधितोऽस्मि। इयताऽपि ते क्रिडा न अवसिता। गण्डस्य उपरि पिडका संवृत्ता। वयस्यः मृगं अनुसरन् आश्रमं प्रविष्टः। तत्र तापसकन्यका शकुन्तला तेन दृष्टा। सः नगरगमनाय कथमपि मनः न करोति। का गतिः ? (पुरतः पश्यन्) वयस्यः इत एव आगच्छति। भवतु ! अङ्गभङ्गेन विकलः इव भूत्वा स्थास्यामि। एवमपि नाम विश्रामं लभेय ! (इति दण्डकाष्ठमवलंब्य तिष्ठति)।

वयस्यः - Friend, अनुगच्छन् - one who follows, परिभ्रमणेन - due to wandering, श्रान्तः - tired, विश्रामः - rest, स्वगतं - with in oneself, भो दिष्ट - Oh fate, मृगयाशीलः - habitual hunter, वयस्यभावेन - due to friendliness, निर्विण्णः - heart broken, मृगः - deer, शार्दूलः - tiger, मध्याह्ने + अपि - even during day time, अटवीतः अटवीं = from forest to forest; पत्रसंकरेण - contamination of leaves,

कषायं - bitter, कदुष्णं - lukewarm, अनियता - disorderly, निकामं - as per one liking, शयितुं - to lie, न शक्नुवः - we are not capable of, प्रत्यूषे + एव - even before dawn, प्रतिबोधितः अस्मि - I was awakened, न निष्क्रामन्ति - not going away, गण्डस्य - of a wound, पिडका - a small boil, संवृत्ता - happened, अंगभङ्गेन - pain due to a cut in the limbs, विकलः - tired, दण्डकाष्ठं अवलम्ब्य - of resting on the stalk.

—*—

## त्रयोविंशः पाठः - Lesson - 23

### अभिज्ञानशाकुन्तलम् (सङ्क्षेपः) - ४

(राजा दुष्यन्तः एकतः प्रविशति । तस्य वयस्यः विदूषकः दण्डकाष्ठं अवलम्ब्य राजानं प्रतीक्षमाणः तिष्ठति)

राजा - (आत्मगतं) सा प्रिया न सुलभा । अस्तु कामम् । मम मनस्तु तस्याः दर्शनेन आश्वसिति । कामः न कृतार्थः। तथापि द्वयोः अन्योन्यं अभिलाषः रतिं कुरुते। कामी स्वतां पश्यति ।

विदूषकः - भो वयस्य ! न मे हस्तपादं प्रसरति । वाचा वदामि । जयतु जयतु भवान् ।

राजा - गात्रस्य उपघातः कुतः ?

विदूषकः - भवानेव अक्षि आकुलं कृतवान् । इदानीं अश्रुकारणं पृच्छति । राजा - न खल्लु अवगच्छामि ।

विदूषकः - राज्यकार्याणि त्वया उज्झितानि । अहं श्वापदान् समुत्सारयन् वर्ते । अतः सन्धिबन्धाः संक्षोभिताः । ततः प्रसीद, एकाहमपि तावत् विश्राम्यताम् ।

राजा - (आत्मगतं) अयं च एवं आह । शकुन्तलायाः अनुस्मरणेन ममापि मृगया न रोचते । (प्रकाशं) वयस्य । तथैव अस्तु । विश्राम्यतु भवान् । ततः परं ममापि एकस्मिन् अनायासे कर्मणि सहायो भवतु ।

विदूषकः - किं मोदकानां खादने ? तथा च इतः क्षणः सुगृहीतः ।

राजा - न न । वक्ष्यामि । कः को अत्र भोः ?

दौवारिकः - (प्रविश्य) भर्ता आज्ञापयतु ।

राजा - सेनापतिं आह्वय ।

(दौवारिको निष्क्रम्य सेनापतिना सह प्रविशति)

सेनापतिः - जयतु जयतु स्वामी । वने श्वापदाः गृहीताः । मृगयायै प्रतिष्ठामहे ।

राजा - भद्र सेनापते ! आश्रमस्य सन्निकर्षे स्थिताः स्मः । अतः ते वचः न अभिनन्दामि । मृगयायाः विरमामः । पूर्वं गतान् वनग्राहिणः निवर्तय । सैनिकाः तपोवनं न उपरुन्धन्तु । तपस्विनां शमः एव धनम् । तेषु दाहकं तेजः गूढम् । तान् मा उत्तेजय ।

सेनापतिः- यत् आज्ञापयति स्वामी । (सेनापतिः निष्क्रान्तः)

एकतः - on one side, प्रतीक्षमाणः - expecting, आत्मगतं - to oneself, अस्तु कामं - let it be, आश्वसिति - gets a

relief, कृतार्थः - Contended having gained one's object satisfied, अभिलाषः - desire, रतिः - Passion, कामी - passionate (or desirous), स्वता - one's right, हस्तपादं - hands & feet, उपघातः - injury, आकुलं - afflicted, अश्रुकारणं - reason for tears, उज्झितानि - were left, श्वापदाः - wild animals, समुत्सारयन् - chasing, driving them out सन्धिबन्धाः - the bone joints, संक्षोभिताः - disturbed, एकाहमपि - atleast for a day, विश्राम्यतां - kindly take rest, आहुः - spoke, say, अनुस्मरणं - continous memory, मृगया - hunting, न रोचते - is not to my liking, अनायासं - stressless, क्षणः - opportunity, वक्ष्यामि - I will tell you दौवारिकः - gatekeeper, भर्ता - master, आज्ञापयतु - please command, आह्वय - please call, निष्क्रम्य- having got out, प्रतिष्ठामहे - let us set off, अभिनन्दामि- I appreciate, विरमाम- Let us retire, वनग्राहिणः - those who have encircled, उपरुन्धन्तु - Let them disturb of the forest, शमः - control of mind, दाहकं - one who burns catelizer, गूढं = hidden, उत्तेजय = activate inspire.

----*-----

## चतुर्विंशः पाठः - Lesson - 24

### धातवः उपसर्गाश्च (४)

**Some more familiar roots**

29. दृश् - पश्यति - sees, उत्पश्यति - stares, expects, परिपश्यति - looks around.

रामः सीतां पश्यति । रामः आकाशे प्लवमानं हनूमन्तं परिपश्यति । सीता लभ्येत इति उत्पश्यति । गुरुः परितः आसीनान् माणवकान् "ते अवहिताः पाठं पठन्ति वा ?" इति परिपश्यति ।

30. सद - सीद - सीदति - is ruined, weeps, is exhausted, प्रसीदति - is pleased,happy, अवसीदति - is tired, विषीदति - sinks down,despairs, निषीदति - sits, आसीदति - approaches, उत्सीदति - falls into ruin.

पङ्के लग्नः मृगः सीदति । महान्तं भारं वहन् वृषभः सीदति । कुसुमितं उद्यानं दृष्ट्वा मनः प्रसीदति । हनुमन्तं आगतं दृष्ट्वा रामः प्रसीदति । सीता दूरे रावणगृहे रुद्धा इति रामः विषीदति । हनुमता आश्वस्तः रामः वृक्षमूले निषीदति । रावणस्य दुश्चरितेन तस्य कुलमेव उत्सीदेत् इति विभीषणः अबिभेत् ।

31. वस - वसति - dwells, प्रवसति - going out of home station, विवसति - stays out, उद्वसति - getting out, आवसति - stays, occupies निवसति - stays inside, उपवसति - stays near or starves.

त्वं तव गृहे वससि । रामः इतः प्रवसति । अहं पृथक् विवसामि । विश्वनाथः कोपेन उद्वसति । दशरथः अयोध्यां आवसति । सीता उटजे निवसति । भक्तः ईश्वरं उपवसति । अद्य एकादशी इति उपवसामि ।

32. पत - पतति - falls, प्रपतति - falls from great height with force, परापतति - falls away, संपतति - falls continually, आपतति - appears unexpected, उत्पतति - tries to fly up.

वृक्षात् पर्णं पतति । गिरेः निर्झरः प्रपतति । भीमेन गदया हतः दुर्योधनः परापतति । वर्षासु मेघात् वर्षाधाराः संपतन्ति । कर्मणि निरतस्य कश्चन विघ्नः आपतति । पतगः डयनाय उत्पतति । आकाशे स पक्षाभ्यां भूयो भूयः उत्पतति ।

33. गम-गच्छ-गच्छति - goes, अपगच्छति - moves away, अनुगच्छति - follows, अवगच्छति - understands, निर्गच्छति - gets out, आगच्छति - comes, (प्रति + आ) प्रत्यागच्छति - returns, प्रतिगच्छति - goes towards, समागच्छति - joins with or arrives, उपगच्छति - goes near, सङ्गच्छते - (A.P.) meets, joins, प्रत्युद्गच्छति - welcomes.

रामो वनं गच्छति । अशुद्धात् स्थलात् अपगच्छति । अहं पितरं अनुगच्छामि । माणवकः आचार्येण पाठितं भागं अवगच्छति । पाठशालां गन्तुं गृहात् निर्गच्छ । सायं मदीयं गृहं आगच्छ । विद्याशालां गतः मम पुत्रः इदानीमेव प्रत्यागच्छति । तेन सह आगतः तस्य वयस्यः स्वगृहं प्रतिगच्छति । सायं पठनाय सः मम पुत्रेण समागच्छेत् । सर्वे माणवकाः गुरुं उपगच्छन्ति । मित्रं मित्रेण सङ्गच्छते । गृहमागतं गुरुं मम पिता प्रत्युद्गच्छति ।

34. सृप-सर्प-सर्पति - crawls, अपसर्पति - moves away, प्रसर्पति - spreads further, विसर्पति - spreads fast, उपसर्पति - approaches.

भुजगः शनैः सर्पति ! दुष्ट ! क्षणेन अपसर्प ! अन्यथा हन्याम् । जले तैलं प्रसर्पति । व्याधिः अपथ्येन विसर्पति । गुरुं विनयेन उपसर्प ।

35. नम-नमति - bows, प्रणमति - bows well, अवनमति -

bends, उन्नमति - stands or sits erect, परिणमति - changes, विनमति - bends, bows.

गुरुं नम । मातरं प्रणम । लज्जया अवनमति । भर्तुः मुखं द्रष्टुं वधूः उन्नमति । आम्रशलाटुः क्रमेण फलतया परिणमति । अग्नौ तप्तः लोहदण्डः विनमति ।

36. क्रमु - क्राम - क्रामति - walks, steps, प्रक्रामति - प्रक्रमते - begins, पराक्रामति - marching (towards enemies) for success, attacks, सङ्क्रामति - traverses, changes the places, आक्रामति - marches forward, attacks, उत्क्रामति - goes out, gets separated, परिक्रामति - walks around.

सूर्यः आकाशं वेगेन क्रामति । विनायकं संपूज्य कार्यं प्रक्रामति । गुरुः वक्तुं प्रक्रमते । क्रुद्धः भीमः शत्रुसेनां पराक्रामति । सूर्यः मेषात् वृषभं सङ्क्रामति । रामः लङ्कां आक्रामति । रामेण हतस्य रावणस्य प्राणाः उत्क्रामन्ति ।

37. भ्रम् - भ्रमति - wanders, परिभ्रमति - roams around, संभ्रमति - gets excited.

अजः तृणाय भ्रमति । सूर्यः भूमिं परिभ्रमति । जामातरं क्रुद्धं दृष्ट्वा श्वश्रूः संभ्रमति ।

38. जि - जय जयति - wins, विजयते (आ प) wins, पराजयते (आ.प) defeats, अपजयति - defeats.

रामो रावणं जयति । भारतदेशो विजयते । अस्माकं सेना शत्रून् पराजयते - अपजयति ।

39. स्मृ - स्मरति = remembers, विस्मरति - forgets, अनुस्मरति - cherishes, अपस्मरति - loses consciousness.

पुत्रः मातरं स्मरति । कृतघ्नः कृतं विस्मरति । कृतज्ञः कदाचित् कृतं अल्पमपि अद्यापि अनुस्मरति । ज्वरितः ज्वरवेगेन अपस्मरति ।

40. तृ-तर-तरति - crosses, सन्तरति - crosses by means of a boat or so, अवतरति - comes down, steps down विनिस्तरति - reaches shore – gets out of debts, वितरति - distributes, उत्तरति - reaches the shore, answers.

नदीं तरति । नौकया सागरं सन्तरति । अहं स्नातुं नदीं अवतरामि । सः स्नातः नद्याः निस्तरति । ऋणात् त्वं प्रथमं निस्तरेः । विवाह-काले बन्धुभ्यः पारितोषिकान् वितरति । नदीतः प्रथमं उत्तर ।

41. रुह-रोह-रोहति । grows sprouts or shoots, आरोहति - climbs, अधिरोहति - ascends, अवरोहति - comes down.

बीजं उप्तं अङ्कुरात्मना रोहति, ततः पल्लवात्मना । कपिः वृक्षं आरोहति । नृपः सिंहासनं अधिरोहति । सूर्यः आकाशात् अस्तगिरिं अवरोहति ।



# पञ्चविंशः पाठः Lesson - 25

## क्रीडारङ्गः

भ्रातः ! बालकानां क्रीडोद्यानं गच्छावः । विद्याशालाः सर्वाः पिहिताः वर्तन्ते । क्रीडोद्याने महान् संमर्दः उपलभ्यते । सर्वे माणवकाः गृहे विनोदनैः अतृप्ताः सायमिहागच्छन्ति । काश्चन क्रीडाः गृह एव क्रीडितुं शक्यन्ते । काश्चन क्रीडाः गृह एव क्रीडितुं शक्यन्ते । काश्चन बहिः विस्तृते प्रांगणे एव क्रीडितुं शक्यन्ते । कूर्दनं, धावनं, उत्प्लवनं, कपर्दी, कन्दुकं, पादकन्दुकं, कन्दुकोत्क्षेपः, वीटा इत्यादयः बहिरेव क्रीडितुं शक्यन्ते ।

भारतदेशे कन्दुकक्रीडा अतीव प्रसिद्धा । काव्येषु कुमारीणां कन्दुकक्रीडाः सरसं वर्ण्यन्ते । ग्रामे ग्रामे, विद्यालये विद्यालये, यत्र यत्र विस्तृतं प्राङ्गणं उपलभ्यते, तत्र तत्र कन्दुकैः क्रीडा संपद्यते । प्रतिवत्सरं अथवा प्रतिविरामकालं तत्र तत्र क्रीडाप्रतियोगः आयोज्यते । तत्र महता उत्साहेन बहवः खेलकाः समापतन्ति । बहवश्च प्रेक्षकाः कुतुकेन समायान्ति ।

एतादृशे क्रीडाप्रतियोगे क्रीडतां द्वे दले भवतः । एकस्मिन् दले दश दश खेलका भवन्ति । एकैकस्य दलस्य पृथक् नेता कश्चित् भवति । तयोर्दलयोः मध्यस्थः एकः क्रीडासमये व्यवस्थां निर्णयति, तां पालयति, अव्यवस्थां वारयति, नियमं तदा तदा निर्दिशति । विवादे उत्पन्ने मध्यस्थो भूत्वा निर्णयं करोति ।

क्रीडाभिः बालकानां कुमाराणां, बालिकानां कुमारिकाणां च महान् लाभः सम्पद्यते । धावनादिना प्राणशक्तिः वर्धते । बलं उपचीयते । स्फूर्तिः प्रसरति । श्रमसहने शक्तिः अभिवर्धते । अङ्गानि प्रत्यङ्गानि च दृढानि भवन्ति । बुद्धिः तीक्ष्णा भवति । नवनवतया उत्पद्यमाने संमर्दे

सद्यः 'किं कर्तव्यं' इति निर्णये पटुता संपद्यते। पदे पदे चतुरता, सूक्ष्मदर्शिता, प्रत्युत्पन्ना मतिश्च प्रदर्शनीया भवति । निर्णीतस्य समयस्य पालनं, अनुशासनस्य अनुगमनं, स्वे दले संमिलितेषु परस्परं प्रीतिः, श्रमसहिष्णुता, साहसं, काले परस्परं सहयोगः, शरीरस्य मनसश्च लाघवं, अन्ततः मनसः रञ्जनं च भवति । अस्तु । भ्रातः! तव कस्यां क्रीडायां रुचिः विद्यते? क्रीडाकाले क्रीड । पठनकाले पठ । तथैव गृहकर्म यदा करणीयं तदा तदपि श्रद्धया उत्साहेन च कुरु ।

क्रीडोद्यानं - play ground, पिहिताः - closed, विनोदं - entertainment by sport articles, अतृप्ताः - dissatisfied, शक्यन्ते - are capable of, प्रांगणे- in the courtyard, कूर्दनं - jumping, उत्प्लवनं - high jump, कन्दुकोत्क्षेपः - throw ball, वीटा - cricket, प्रतिविरामकालं - on every holiday, क्रीडाप्रतियोगः - sport competition, दलं - team, खेलकाः - players, समापतन्ति - join together, प्रेक्षकाः - viewers, व्यवस्था - discipline, निर्णयति - decides, निर्दिशति - points out, उपचीयते - increases, स्फूर्तिः - Vibration, श्रमसहनं - bearing the stress, प्रत्यङ्गानि - limbs, सद्यः - immediately, पटुता - cleverness, पदे पदे - in each step, चतुरता - smartness, सूक्ष्मदर्शिता - deep vision, प्रत्युत्पन्ना मतिः - presence of mind, प्रदर्शनीया - to be exhibited, समयः - agreed rule, अनुगमनं - submission, श्रमसहिष्णुता - forebearence, साहसं - adventure, रञ्जनं - pleasing.

---*---

# षड्विंशः पाठः Lesson - 26

## नकारान्तशब्दाः - २

(पञ्चमं पाठं अनुवर्तते)

1. नकारान्तः पुंलिंगः गुणिन् शब्दः

| | | |
|---|---|---|
| गुणी | गुणिनौ | गुणिनः |
| गुणिनं | गुणिनौ | गुणिनः |
| गुणिना | गुणिभ्यां | गुणिभिः |

गुणिषु

2. नकारान्तः पुंलिंगः तपस्विन् शब्दः

| | | |
|---|---|---|
| तपस्वी | तपस्विनौ | तपस्विनः |
| तपस्विनं | तपस्विनौ | तपस्विनः |
| तपस्विना | तपस्विभ्यां | तपस्विभिः |

तपस्विषु

Let us see the second type the words like आत्मन्, महात्मन् , ब्रह्मन्, अर्वन् यक्ष्मन् etc., come under this: In these, the singular dual forms of first and second case and plural in first case are in long vowels like, आत्मा आत्मानौ etc.,

3. नकारान्तः पुंलिंगः आत्मन् शब्दः

| | | |
|---|---|---|
| आत्मा | आत्मानौ | आत्मानः |
| आत्मानं | आत्मानौ | आत्मनः |
| आत्मना | आत्मभ्यां | आत्मभिः |

आत्मसु

### 4. नकारान्तः पुंलिंगः यक्ष्मन् शब्दः

| | | |
|---|---|---|
| यक्ष्मा | यक्ष्माणौ | यक्ष्माणः |
| यक्ष्माणं | यक्ष्माणौ | यक्ष्मणः |
| यक्ष्मणा | यक्ष्मभ्यां | यक्ष्मभिः |

In यक्ष्मन् - Sabda, न - changes to, ण

In the third type, the words like, राजन् पूषन् etc., come under this.

### 5. नकारान्तः पुंलिंगः राजन् शब्दः

| | | |
|---|---|---|
| राजा | राजानौ | राजानः |
| राजानं | राजानौ | राज्ञः |
| राज्ञा | राजभ्यां | राजभिः |
| राज्ञे | राजभ्यां | राजभ्यः |
| राज्ञः | राजभ्यां | राजभ्यः |
| राज्ञः | राज्ञोः | राज्ञां |
| राज्ञि-राजनि | राज्ञोः | राजसु |
| हे राजन् | हे राजानौ | हे राजानः |

In this राजन् शब्द the vowel अ next to ज disappears and ज् combining with न् turns to ज्ञ, In the same way the vowel अ next to ष also disappears ष् + ण combines to form ष्ण्. So the forms are पूष्णः, पूष्णा, पूष्णे, पूष्णः etc., In the seventh case, there are to forms in singular as पुषणि राजनि and पूणि, पूषणि.

# सप्तविंशः पाठः - Lesson - 27

## नकारान्तनपुंसकलिङ्गशब्दाः ।

The words in feminne gender ending न् don't exist in this lesson we will see the words in neuter gender. Examples are given below:-

1. नकारान्तः नपुंसकलिङ्गः गुणिन् शब्दः

| | | |
|---|---|---|
| गुणि | गुणिनी | गुणीनि |
| गुणि | गुणिनी | गुणीनि |
| गुणिना | गुणिभ्यां | गुणिभिः etc., |

From the 3rd case, The forms are the same as in masculine gender.

2. नकारान्तः नुपंसकलिङ्गः यशस्विन् शब्दः

| | | |
|---|---|---|
| यशस्वि | यशस्विनी | यशस्वीनि |
| यशस्वि | यशस्विनी | यशस्वीनि |
| यशस्विना | यशस्विभ्यां | यशस्विभिः |

From the 3rd case they are the same as in masculine gender.

3. नकारान्तः नपुंसकलिङ्गः कर्मन् शब्दः

| | | |
|---|---|---|
| कर्म | कर्मणी | कर्माणि |
| कर्म | कर्मणी | कर्माणि |
| कर्मणा | कर्मभ्यां | कर्मभिः |

From the 3rd case they are the same as in masculine gender.

4. नकारान्तः नपुंसकलिङ्गः नामन् शब्दः

| | | |
|---|---|---|
| नाम | नाम्नी/नामनी | नामानि |
| नाम | नाम्नी/नामनी | नामानि |
| नाम्ना | नामभ्यां | नामभिः |
| नाम्ने | नामभ्यां | नामभ्यः |
| नाम्नः | नामभ्यां | नामभ्यः |
| नाम्नः | नाम्नोः | नाम्नां |
| नाम्नि/नामनि | नाम्नोः | नामसु |
| हे नामन् | हे नाम्नी/नामनी | हे नामानि |

नामन् - sabda is like, राजन्. The अ in the letter म disappears and नाम्नी, नाम्नि are the peculiar forms in first, second, and Seventh cases. धामन्, दामन् are similar to नामन् ।

*Translate into English:-*

1. यशस्विनि इक्ष्वाकुकुले श्रीरामः अवतरति स्म ।

2. वास्तुकर्मणि निपुणः एकः शिल्पी नगरे वसति ।

3. 'नारायण' इति नाम्नि/नामनि चत्वारि अक्षराणि सन्ति ।

4. श्रीराजगोपालाचार्यः 'राजाजी' इति नाम्ना प्रसिद्धः ।

5. यशोदा श्रीकृष्णं दाम्ना उदरे बबन्ध । अतः दामोदरः इति नाम।

6. गोष्ठेषु गावः वृषभाश्च पृथक् दाम्नि/दामनि बद्धाः, पंक्तिशः तिष्ठेयुः।

7. केरलेषु नालिकेरतन्तुभिः पादन्यासनानि दामानि महादामानि मार्गास्तरणानि च कुर्वन्ति ।

8. दाम्नां निर्माणमेव तत्र बहूनां जीवनं भवति ।

वास्तुकर्मणि - In the art of house building, बबन्ध - tied, bound, बद्धः - being tied, पङ्क्तिशः in rows, पादन्यासनानि - floor mats, मार्गास्तरणानि - carpets.

Translate into Sanskrit:-

1. Arjuna has ten other names like Phalguna, Partha etc.,
2. Count each letter in my name every day.
3. Santanu's son Devavrata became famous in the name Bhishma.
4. What's there in a name? A man becomes great only by his action.
5. Rama guarded ascetic Viswamitra's sacrifice.

--*--

## अष्टाविंशः पाठः - Lesson - 28

There are three genders for numbers एक to चतुर् Starting from पञ्च upto नवदश all the sabdas are in neuter gender.Then upto नवनवतिः are in feminine gender. Let us see the numerals in Sanskrit from 11 to 100.

| | | | | | |
|---|---|---|---|---|---|
| दश | 10 | अष्टाविंशतिः | 28 | षट्चत्वारिंशत् | 46 |
| एकादश | 11 | नवविंशतिः | 29 | सप्तचत्वारिंशत् | 47 |

| | | | | | |
|---|---|---|---|---|---|
| द्वादश | 12 | त्रिंशत् | 30 | अष्टचत्वारिंशत् | 48 |
| त्रयोदश | 13 | एकत्रिंशत् | 31 | नवचत्वारिंशत् | 49 |
| चतुर्दश | 14 | द्वात्रिंशत् | 32 | पञ्चाशत् | 50 |
| पञ्चदश | 15 | त्रयस्त्रिंशत् | 33 | एकपञ्चाशत् | 51 |
| षोडश | 16 | चतुस्त्रिंशत् | 34 | द्विपञ्चाशत् | 52 |
| सप्तदश | 17 | पञ्चत्रिंशत् | 35 | त्रिपञ्चाशत् | 53 |
| अष्टादश | 18 | षट्त्रिंशत् | 36 | चतुःपञ्चाशत् | 54 |
| नवदश | 19 | सप्तत्रिंशत् | 37 | पञ्चपञ्चाशत् | 55 |
| विंशतिः | 20 | अष्टत्रिंशत् | 38 | षट्पञ्चाशत् | 56 |
| एकविंशतिः | 21 | नवत्रिंशत् | 39 | सप्तपञ्चाशत् | 57 |
| द्वाविंशतिः | 22 | चत्वारिंशत् | 40 | अष्टपञ्चाशत् | 58 |
| त्रयोविंशतिः | 23 | एकचत्वारिंशत् | 41 | नवपञ्चाशत् | 59 |
| चतुर्विंशतिः | 24 | द्विचत्वारिंशत् | 42 | षष्टिः | 60 |
| पञ्चविंशतिः | 25 | त्रिचत्वारिंशत् | 43 | एकषष्टिः | 61 |
| षड्विंशतिः | 26 | चतुश्चत्वारिंशत् | 44 | द्विषष्टिः | 62 |
| सप्तविंशतिः | 27 | पञ्चचत्वारिंशत् | 45 | त्रिषष्टिः | 63 |
| चतुष्षष्टिः | 64 | अष्टसप्ततिः | 78 | द्विनवतिः | 92 |
| पञ्चषष्टिः | 65 | नवसप्ततिः | 79 | त्रिणवतिः | 93 |
| षट्षष्टिः | 66 | अशीतिः | 80 | चतुर्णवतिः | 94 |
| सप्तषष्टिः | 67 | एकाशीतिः | 81 | पञ्चनवतिः | 95 |

| | | | | | |
|---|---|---|---|---|---|
| अष्टषष्टिः | 68 | द्व्यशीतिः | 82 | षण्णवतिः | 96 |
| नवषष्टिः | 69 | त्र्यशीतिः | 83 | सप्तनवतिः | 97 |
| सप्ततिः | 70 | चतुरशीतिः | 84 | अष्टनवतिः | 98 |
| एकसप्ततिः | 71 | पञ्चाशीतिः | 85 | नवनवतिः | 99 |
| द्विसप्ततिः | 72 | षडशीतिः | 86 | शतं | 100 |
| त्रिसप्ततिः | 73 | सप्ताशीतिः | 87 | सहस्रं | 1000 |
| चतुस्सप्ततिः | 74 | अष्टाशीतिः | 88 | अयुतं | 10000 |
| पञ्चसप्ततिः | 75 | नवाशीतिः | 89 | लक्षं | 100000 |
| षट्सप्ततिः | 76 | नवतिः | 90 | प्रयुतं | 1000000 |
| सप्तसप्ततिः | 77 | एकनवतिः | 91 | कोटिः | 10000000 |

Translate into English:-

धृतराष्ट्रस्य शतं पुत्राः। मासस्य त्रिंशत् दिनानि। पक्षस्य पञ्चदश दिनानि। द्वादश मासाः संवत्सरः। दिनस्य चतुर्विंशतिः होराः। होरायाः षष्टिः निमेषाः। निमेषस्य षष्टिः क्षणानि। वर्षस्य त्रीणि शतानि पञ्चषष्टिश्च दिनानि। अर्चकः अष्टोत्तरं शतं नामानि वदन् देवं अर्चयति।

*Translate into Sanskrit:-*

Lord skanda has 12 hands and 12 eyes.

He gave me hundred rupees.

One day has sixty ""Nadi"

One Nadi consists of 60 vinadis.

There are hundred pages in each book.

There are 42 letters in each line.

Lord Siva's devotees are 64.

My salary is Rs.75.

रूप्यकाणि - rupees. प्रतिपङ्क्ति in each line, भक्ताः- devotees, वेतनं - salary.

* * *

## नवविंशः पाठः Lesson - 29

### संख्याः- 2

In numerals, ऊन (less) word is used for 19, 29, 49 etc., एकोनविंशतिः 19, एक ऊनत्रिंशत् - 29 एकोन चत्वारिंशत् 39, एकोनपञ्चाशत् - 49 etc., From three (3) to eighteen (18) all the Sabdas come in plural only. When we say नवदश (19) it is plural, but एकोनविंशतिः is only in Singular, Thus नवविंशतिः etc. Starting from 20 the numeral word will be only in Singular. The forms in seven cases are as under.

| | | | | |
|---|---|---|---|---|
| 1. | विंशतिः | त्रिंशत् | चत्वारिंशत् | पञ्चाशत् |
| 2. | विंशतिं | त्रिंशतं | चत्वारिंशतं | पञ्चाशतं |
| 3. | विंशत्या | त्रिंशता | चत्वारिंशता | पञ्चाशता |
| 4. | विंशत्यै-तये | त्रिंशते | चत्वारिंशते | पञ्चाशते |
| 5. | विंशतेः | त्रिंशतः | चत्वारिंशतः | पञ्चाशतः |
| 6. | विंशतेः | त्रिंशतः | चत्वारिंशतः | पञ्चाशतः |
| 7. | विंशतौ-त्यां | त्रिंशति | चत्वारिंशति | पञ्चाशति |
| 1. | षष्टिः | सप्ततिः | अशीतिः | नवतिः |
| 2. | षष्टिं | सप्ततिं | अशीतिं | नवतिं |
| 3. | षष्ट्या | सप्तत्या | अशीत्या | नवत्या |

| | | | | |
|---|---|---|---|---|
| 4. | षष्ट्यै | सप्तत्यै | अशीत्यै | नवत्यै |
| 5. | षष्ट्याः | सप्तत्याः | अशीत्याः | नवत्याः |
| 6. | षष्ट्याः | सप्तत्याः | अशीत्याः | नवत्याः |
| 7. | षष्ट्यां | सप्तत्यां | अशीत्यां | नवत्यां |

If विंशत्यौ, विंशत्यः are used in dual and plural, it will mean 2 sets of 20 each or 3 sets of 20. गवां शते means 2 sets of hundred.

शतेषु जायते शूरः सहस्रेषु च पण्डितः ।
वक्ता दशसहस्रेषु दाता भवति न वा ।।

Even in this verse शतेषु, सहस्रेषु, दशसहस्रेषु all the above words are in plural which mean in many hundreds, in many thousands in many ten thousands etc.,

शूरः शतेषु जायते । पण्डितः सहस्रेषु जायते । वक्ता दशसहस्रेषु जायते । दाता भवति न वा । मनुष्याणां सहस्रेषु कश्चित् यतति सिद्धये । (गीता)

## त्रिंशः पाठः Lesson - 30

### संख्येय शब्दः- Numerical Sabdas

In the previous lesson we saw cardinals, which denote numbers. They are used as adjectives. Starting from 1 to 4 these sabdas have three genders and numbers as well from 5, there no change in genger.

In this lesson the first, second third etc (ordinals) are expressed. These like adjectives, have three genders & three numbers.

| | | | |
|---|---|---|---|
| 1st. | प्रथमः | प्रथमा | प्रथमं |
| 2nd. | द्वितीयः | द्वितीया | द्वितीयं |
| 3rd. | तृतीया | तृतीया | तृतीयं |
| 4th. | चतुर्थः | चतुर्थी | चतुर्थं |
| 5th. | पञ्चमः | पञ्चमी | पञ्चमं |
| 6th. | षष्ठः | षष्ठी | षष्ठं |
| 7th. | सप्तमः | सप्तमी | सप्तमं |
| 8th. | अष्टमः | अष्टमी | अष्टमं |
| 9th. | नवमः | नवमी | नवमं |
| 10th. | दशमः | दशमी | दशमं |

11th. एकादशः
12th. द्वादशः
13th. त्रयोदशः
14th. चतुर्दशः
15th. पञ्चदशः
16th. षोडशः
17th. सप्तदशः
18th. अष्टादशः
19th. नवदशः

In (masculine) एकादशः in feminine gender एकादशी and in neuter gender एकादशं etc.,and like this till 19 (नवदश) The same pattern continues.

20th. विंशः
21th. एकविंशः
22nd. द्वाविंशः
23rd. त्रयोविंशः
24th. चतुर्विंशः
25th. पञ्चविंशः
32nd. द्वात्रिंशः
33rd. त्रयस्त्रिंशः
34th. चतुस्त्रिंशः
35th. पञ्चत्रिंशः
36th. षट्त्रिंशः
37th. सप्तत्रिंशः

26th. षड्विंशः 38th.अष्टत्रिंशः

27th. सप्तविंशः 39th.नवत्रिंशः

28th. अष्टविंशः 40th.चत्वारिंशः

29th. नवविंशः 41st.एकचत्वारिंशः

30th. त्रिंशः 42nd. द्विचत्वारिंशः

31st.एकत्रिंशः 43rd.त्रिचत्वारिंशः

44th.चतुश्चत्वारिंशः 52nd.द्वितञ्चाशः

45th.पञ्चचत्वारिंशः 53rd.त्रिपञ्चाशः

46th.षट्चत्वारिंशः 54th.चतुष्पञ्चाशः

47th.सप्तचत्वारिंशः 55th.पञ्चपञ्चाशः

48th.अष्टचत्वारिंशः 56th.षट्पञ्चाशः

49th.नवचत्वारिंशः 57th.सप्तपञ्चाशः

50th.पञ्चाशः 58th.अष्टपञ्चाशः

51st.एकपञ्चाशः 59th.नवपञ्चाशः

from 21st to 59th, the endings will be शः शी शं in three genders

60th.षष्टितमः 72nd.द्विसप्ततितमः

61st.एकषष्टितमः 73rd.त्रिसप्ततितमः

62nd.द्विषष्टितमः 74th.चतुस्सप्ततितमः

63rd.त्रिषष्टितमः 75th.पञ्चस्सप्ततितमः

64th.चतुष्षष्टितमः 76th.षट्सप्ततितमः

65th.पञ्चषष्टितमः 77th.सप्तसप्ततितमः

66th.षट्षष्टितमः 78th.अष्टसप्ततितमः

67th.सप्तषष्टितमः 79th.नवसप्ततितमः

68th.अष्टषष्टितमः
69th.नवषष्टितमः
70th.सप्ततितमः
71st.एकसप्ततितमः
80th.अशीतितमः
81st.एकाशीतितमः
82nd.द्व्यशीतितमः
83rd त्र्यशीतितमः
84th.चतुरशीतितमः
85th.पञ्चाशीतितमः
86th.षडशीतितमः
87th.सप्ताशीतितमः
88th.अष्टाशीतितमः
89th.नवाशीतितमः
90th.नवतितमः
91st.एकनवतितमः
92nd.द्विनवतितमः
93rd.त्रिनवतितमः
94th.चतुर्णवतितमः
95th.पञ्चनवतितमः
96th.षण्णवतितमः
97th.सप्तनवतितमः
98th.अष्टनवतितमः
99th.नवनवतितमः
100th,शततमः
1000th.सहस्रतमः
10000th.अयुततमः ।
100000th.लक्षतमः

from 60th (षष्टितमः) till लक्षतमः, तमः is masculine, तमा feminine, तमं is neuter

19th एकोनविंशतितमः, ऊनविंशतितमः

29th एकोनत्रिंशत्तमः, ऊनत्रिंशत्तमः

39th एकोनचत्वारिंशत्तमः, ऊनचत्वारिंशत्तमः

49th एकोनपञ्चाशत्तमः, ऊनपञ्चाशत्तमःetc.,

*Translate into English:-*

एकं बालकं एकां बालिकां च अत्र आनय ।

एकं फलं नय ।

एकस्मै बालकाय फलं वितर ।

एकस्यै बालिकायै वस्त्राणि यच्छ ।

द्वाभ्यां बालकाभ्यां धनं यच्छति ।

द्वयोः बालिकयोः सीता मुख्या ।

रामः द्वे फले आनयत् ।

द्वयोः माणवकयोः रामः पटुतरः ।

त्रीणि पुस्तकानि अत्र सन्ति ।

तिस्रः गावः तृणं चरन्ति ।

त्रयः सेवकाः तत्र कर्म कुर्वन्ति ।

विष्णोः भुजाः चत्वारः ।

ब्रह्मणः चत्वारि मुखानि ।

अस्याः विद्यायाः चतस्रः शाखाः सन्ति ।

महतां शीलानि पञ्च ।

कुन्त्याः पञ्च पुत्राः ।

आकाशे नव ग्रहाः सप्तविंशतिः नक्षत्राणि च सन्ति ।

नवसु ग्रहेषु चन्द्रः मनोहरः ।

सप्तविंशतौ नक्षत्रेषु रोहिणी चन्द्रस्य प्रियतमा ।

नवसु व्याकरणेषु हनूमान् पण्डितः ।

धर्मः अर्थः कामः मोक्षः इति चतुर्षु पुरुषार्थेषु धर्मः श्रेष्ठः ।

रामः लक्ष्मणः भरतः शत्रुघ्नः इति चत्वारः दशरथस्य पुत्राः

चत्वारः बाहव इव अभवन् ।

पाण्डवेषु पञ्चसु धर्मपुत्रः प्रथमः।

माद्री पाण्डोः द्वितीया भार्या आसीत् ।

वासुदेवः चतुर्थ्यां कक्ष्यायां पठति ।

राधाकृष्णः भारतस्य द्वितीयो राष्ट्रपतिः ।

रामः नवम्यां जातः, कृष्णः अष्टम्याम् ।

विजयराघवः कक्ष्यापरीक्षायां उत्तीर्णेषु प्रथमः ।

वार्षिकोत्सवे तस्य प्रथमं पारितोषिकं दत्तम् ।

मम कक्ष्यायां त्रिंशं स्थानं राममूर्तिः लभते ।

नवम्यां कक्ष्यायां अष्टसु वर्गेषु पञ्चशतं माणवकाः पठन्ति ।

दशम्यां कक्ष्यायां प्रथमे वर्गे अष्टौ, द्वितीये वर्गे त्रयश्च पुरस्कारं लभन्ते।

सप्तम्यां कक्ष्यायां एकविंशा माणविका, अष्टम्यां कक्ष्यायां एकषष्टितमा माणविका च कन्दुकखेलायां पारितोषिकं लभेते ।

पक्षे पक्षे प्रथमा द्वितीया तृतीया चतुर्थी पञ्चमी इति क्रमेण पञ्चदश तिथयः भवन्ति ।

वसुदेवस्य देवक्यां जातः अष्टमः पुत्रः श्रीकृष्णः ।

"प्रथमाः तत्रैव तिष्ठन्तु । द्वितीयाः एकं पदं पुरतः आगच्छन्तु । तृतीयाः त्रीणि पदानि पुरतः आगच्छन्तु" इति व्यायामाचार्यः आदिशति ।

प्रतिमासं प्रथमे दिवसे कर्मकराणां वेतनं दीयते ।

श्रावणात् परं अष्टमे दिने कृष्णः अवातरत् ।

अद्य एप्रिल्मासस्य द्वाविंशं (द्वाविंशतितमं) दिनम् ।

श्रीरामस्य जन्मदिनं चैत्रशुक्लनवमी तिथिः ।

'राजन्' शब्दस्य सप्तमीं विभक्तिं वद ।

अस्य पुस्तकस्य चतुश्चत्वारिंशे पुटे एकं चित्रं अस्ति ।

कन्यकाः अष्टादशे वयसि, बालकाः एकविंशे वयसि च विवाहं अर्हन्ति इति राजकीयनियमः ।

अवातरत् - came down or took incarnation, वितर - give, पटुतरः - cleverer, शीलानि - good habits लभेते - two get, कन्दुकखेला - play with the ball.

*Translate into Sanskrit.*

1. My 4th daughter is Gowri
2. In the 18th room 3 foreigners live.
3. Among the stars, 22nd is Sravanam and 27th is Revati.
4. In the Mahabharata war Drona died on the 15th day.
5. Rama went to the forest at his 25th year.
6. Children go to school at the age of 3.
7. 95 boys are studying in the 10th class.

Write in numerals.

एकोनचत्वारिंशत्, द्विचत्वारिंशत्, ऊनपञ्चाशत्, चतुःषष्टिः, शतं, सहस्रम्

*Write in numerals in sanskrit 19,29,39,80,85,95*

★★★

# एकत्रिंशः पाठः Lesson - 31

## सन्धिः- अच् सन्धिः- अपवादाः

We have seen general rules of grammer. Here we have some exceptions. This we call as अपवाद in Sanskrit.

Exception in दीर्घ सन्धि in selected few words.

शक + अन्धुः= शकन्धुः (not शकान्धुः) कर्कन्धुः (not कर्कान्धुः) सीमन्तः (not सीमान्त) (related to parting of the hair). The same सीमान्त is the end of the barrier - सीमन्तः केशवेशे is the rule. कुल - अटा=कुलटा, सार+अङ्गः=सारङ्गः कुलाटा - an unchasete woman. सारङ्गः a dier. कुलाटा means a lady who goes from house to house, साराङ्गः - A man having strong limbs. Here पररूपसन्धिः has come. When in combination of two vowels, the retaining of the latter vowel is पररूपसन्धिः. In प्रकृतिभाव सन्धि - combination doesn't take place.

When the words ending in ई ऊ and ए in dual, combine with any other words, no combination takes places. अमी + ईशाः= अमी ईशाः (no दीर्घसन्धि) अमू+ऊहौ etc.,

## गुणसन्धिः

If इ ई, उ ऊ, ऋ ऌ come next to अ or आ, the ए, ओ, अर्, अल् come respectively after the combination. अ+इ, आ+इ, अ+ई, आ+ई=ए

अ+उ, आ+उ, अ+ऊ, आ+ऊ=ओ

अ+ऋ, आ+ऋ=अर्

In this combination the usage of ऋ ऌ are very less.

अ+इ=एनर + इन्द्रःनरेन्द्रः देव + इन्द्रः=देवेन्द्रः

आ+इ=ए महा+इन्द्रः=महेन्द्रः तथा+इति= तथेति

अ+ई=एनर + ईशः=नरेशः गण+ईशः=गणेशः

आ+ई=ए रमा+ईशः=रमेशः महा+ईश्वरः=महेश्वरः

अ+उ=ओ हित+उपदेशः=हितोपदेशः चन्द्र+उदयः=चन्द्रोदयः

आ+उ=ओ गङ्गा+उदकं=गङ्गोदकं रमा+उक्तं=रमोक्तं

अ+ऊ=ओ जल+ऊर्मिः= जलोर्मिः नव+ऊढः=नवोढः

आ+ऊ=ओ यमुना+ऊर्मिः=यमुनोर्मिः तथा+ऊर्ध्वं=तथोर्ध्वम्

अ+ऋ=अर् देव+ऋषिः=देवर्षिः सप्त+ऋषिः=सप्तर्षिः

आ+ऋ=अर् महा+ऋषिः=महर्षिः

राजा+ऋषिः=राजर्षिः

There are exceptions to the above rule. अक्ष+ऊहिनी = अक्षौहिणी. Here instead of ओ, there is औ in the combined word. In some places अ+ऋ will not join (i.e.) you can write it as ब्रह्मर्षिः or even ब्रह्म ऋषिः। सप्तर्षीणां or सप्तऋषीणां. In these, combination takes place optionally. There is a word ऋणार्णं. Here अ=ऋ=आर्, so instead of short अ, we get long आ in अर् । This long आर् is called वृद्धिः । Next, स्व+ईरिणी= is स्वैरिणी(i.e.) आ + ई=ऐ not ए, ऐ is वृद्धि letter. These usages are already in existance.

## वृद्धिसन्धिः

The वृद्धि letters are आ ऐ and औ. The condition is, if ए and ऐ come after अ-आ, there will be ऐ in the place of both, if ओ and ओ come after अ and आ, there will be औ in the place of both.

There are exceptions even to this Sandhi. In some cases instead of वृद्धि some times we get पररूपसन्धि । This is also optional. e.g.:- बिम्ब + ओष्ठः = बिम्बौष्ठिः (This is example of वृद्धिः) बिम्बोष्ठ is the result of पररूपसन्धि । (The lips like बिम्ब fruit) Like this स्थूलौतुःस्थूलोतुः शिवाय+ओं = शिवायों This is also an exception.

## यण् सन्धिः

य् व् र् ल् are यण् letters. When the short and long forms of इ, उ, ऋ, ऌ combine with any dissimilar vowel य् व्, र्,ल् come in the place of combination(i.e) these यण् letters replace the vowels of the first word and combine with the vowels of the succeeding word.

इ+अ=य--यदि+अपि=यद्यपि, इति +अपृच्छत् = इत्यपृच्छत्

इ+आ= या--अति+आचारः=अत्याचारः, इति + आदि=इत्यादि

ई+अ=य--गौरी+अस्ति=गौर्यस्ति

ई+आ=या--नदी+आगच्छति= नद्यागच्छति

इ+उ=यु--अभि+उदयः=अभ्युदयः, इति+उवाच=इत्युवाच

ई+उ=यु--गौरी+उत्तिष्ठति=गौर्युत्तिष्ठति

ऋ + अ = र  धातृ + अंशः=धात्रंशः, पित्रर्थम्

ऋ + आ = रा  पितृ + आ = पित्रा,मात्रा

ऋ + ई = री  कर्तृ + ई=कर्त्री

ऋ + ए = रे  दातृ + ए=दात्रे,मात्रे

There are exceptions to these rules also. e.g.:- कवी+एतौ= remains as कवी एतौ No combination takes place. Like this पटू+इमौ, अमू+आसते । All these remains as they are. No combination will occur there. We will see the explanation later in प्रकृतिभाव सन्धि.

## अयवायाव सन्धिः

In the combination of two vowels, any of the following changes can occur. The change occurs either to the previous letter, or succeeding letter or for both. In दीर्घ-गुण-वृद्धि Sandhis, the change takes places in both the letters. In यण् and अयवायाव Sandhis, the change occurs only to the previous vowel. In the following examples, अत्र + अहं=अत्राहं,हरि=ईशः=हरीशः etc., the long vowels आ and ई replace both the previous and second vowels. In गुण सन्धि, a combined form of ए and ओ appears in the place of अ+इ, and अ+उ. eg. पश्य+इति पश्येति । राधा+उवाच= राधोवाच । In वृद्धि सन्धि ऐ and औ replace अद्य+एव= अ+एव=अद्यैव, तव+औषधं-तवौषधम् । In यण् सन्धि, like इति + अवदत् = इत्यवदत् लघु+आगच्छ=लघ्वागच्छ, In the combination (1) त् + य् + अ, (2) घ्+व्+आ the change is only for the previous letter.

Look at the table given in the next page.

There is another change in अयवायाव सन्धि बाले + उपरि = बालय् + उपरि, बालयुपरि = बाल उपरि.

हरे+इति=हरय्+इति=हर इति

गुरो+एकः=गुरव्+एकः=गुर एकः

गुरौ+अयं=गुराव्+अयं=गुरावयं

In the first three examples य्,व् disappear optionally in the final word, but in the fourth example this change doesn't take place as when औ changes to आव्, this व् mostly wont disappear.

दीर्घ-गुण-वृद्धि-अयवायावसन्धिक्रमः

Split the words

1. अत्रैकः, 2. कुत्रायं, 3.रामस्यासनं, 4.ममानुजः, 5.तवेच्छा, 6.गृहस्योपरि, 7.तावुभौ, 8.तदर्षयः, 9.लक्ष्म्यागता, 10.उभावपि, 11.अण्वपि, 12.तथेति ।

Combine the words

1. आलये + उत्सवः 2.निशि + एकाकी, 3.मम + उपकारः, 4.अत्र + अपि, 5.इति + इव, 6.क्व + एते, 7.तव + औषधं, 8.लघु + आगच्छ, 9.अद्य + इह + उत्सवः, 10.तत्र + उद्याने, 11.उद्याने + एव, 12.राधा + इह + आगच्छति, 13.कस्य + अपि + इदं, 14.विभीषणस्य + उपदेशः, 15.कृष्णस्य + इङ्गितं, 16.उत्तिष्ठ + उत्तिष्ठ, 17.आगच्छ + आगच्छ, 18.एहि + एहि, 19.बालौ + उभौ + अत्र, 20.उपरि + उपरि ।

प्रकृतिभाव सन्धिः ।

The dual forms ending in ई ऊ and ए, when they combine with any vowel, neither यण् nor अयवायाव take place. (i.e) no combination takes place. Therefore it is called प्रकृतिभाव सन्धिः

Look at the examples given below:-

1. यती आगच्छतः

Two ascetics come here.

2. कपी इतस्ततः पश्यतः ।

Two monkeys look here and there.

3. कवी उत्तिष्ठतः

Two poets get up.

4. भूपती एकासन उपविशतः ।

Two kings sit on one seat.

5. गुरू आलयादागच्छतः ।

Two teachers come from temple.

6. धेनू उच्चैः हुम्भारवं कुरुतः ।

Two cows make ""Humbha" sound loudly.

7. रज्जू एकं फलकं उद्धरतः ।

Two ropes lift one board.

In the above sentences यती, कपी, कवी, भूपती are dual forms ending in ई. These when they place. Theyjoin with अ, इ, उ, ए, combination does not take place.

They remain as they are. In the fourth एकासने उपविशतः these two words combine in अयवायाव pattern य् disappears.

The neuter gender words look same in dual of first & Second cases and the singular Seventh case like फले, वने, etc., We have to understand the difference as per the context.

फले + अपि, वने + अत्र In these examples it is प्रकृतिभावः There is no combination and if it is Seventh case it will be फलेऽपि and वनेऽत्र etc.,

फलं फले फलानि वनं वने वनानि

फले फलयोः फलेषु वने वनयोः वनेषु

So प्रकृतिभाव is an exception to दीर्घ, यरण्,अयवायाव Sandhis. पूर्वरूपसन्धि is exception to अयवायाव Sandhi. The words which don't come under these rules alone will follow the original form.

Look at the examples 5,6&7. Here the dual forms गुरू,धेनू,रज्जू etc., when join with आ उ, and ए instead of forming the forms of यण्, दीर्घ यण् ie., गुर्वालयात् , धेनूच्चैः, and रज्जवेक, they remain the same as the independant words that are before the combination. Look at the other examples.

8. कन्ये उद्याने विहरतः ।
   Two girls are playing in the garden.

9. तस्य द्वे अपि भार्ये ईश्वरं नमतः ।
   His two wives also bow to God.

## दीर्घ-गुण-वृद्धि-अयवायावसन्धिक्रमः

Combination of similar and dissimilar vowels

| | +अ | आ | इ | ई | उ | ऊ | ऋ | ए | ऐ | ओ | औ |
|---|---|---|---|---|---|---|---|---|---|---|---|
| अ, आ | आ | आ | ए | ए | ओ | ओ | अर्, आर् | ऐ | ऐ | औ | औ |
| इ, ई | य | या | ई | ई | यु | यू | यृ | ये | यै | यो | यौ |
| उ, ऊ | व | वा | वि | वी | ऊ | ऊ | वृ | वे | वै | वो | वौ |
| ऋ, ॠ | र | रा | रि | री | रु | रू | ॠ | रे | रै | रो | रौ |
| ए | अय | अया | अयि | अयी | अयु | अयू | | अये | अयै | अयो | अयौ |
| ओ | अव | अवा | अवि | अवी | अवु | अवू | | अवे | अवै | अवो | अवौ |
| औ | आव | आवा | आवि | आवी | आवु | आवू | | आवे | आवै | आवो | आवौ |

10. रामः द्वे फले आनयति ।
Rama brings two fruits.

Here the dual forms remain the same. So they are in प्रकृतिभाव सन्धिः

## पूर्वरूप सन्धिः

The words that end in ए & ओ combine with the short अ next to it, the previous letter अ will merge behind the ए and with अवग्रह (ऽ) in between and the previous vowels will be retained. This is called पूर्वरूप सन्धि ।

1. देव!अनर्हे+अपि(अनर्हेऽपि) मयि दयां कुरु ।

O God, even if I am unworthy, please show kindness to me.

2. तस्य पनसफले+अधिका(फलेऽधिका) प्रीतिः ।

He has great liking for jack fruit.

3. सीता वने+अपि (वनेऽपि) रामं अनुससार ।

Sita followed Rama even in the forest.

4. भारतदेशे+अनेकाः (देशेऽनेकाः) पुण्याः नद्यः प्रवहन्ति ।

Many holy rivers flow in the Country India BHARAT

5. गुरो + अयं (गुरोऽयं) मम पुत्रः । तं पाठयतु भवान् ।

Oh teacher, He is my son, please teach him lesson.

6. शंभो + अपि (शंभोऽपि) त्वं संस्कृतं पठसि ?

Oh, Sambhu, do you learn Sanskrit. ?

7. इन्दो + असकृत् (इन्दोऽसकृत्) तत्र मागच्छ ।

Oh Indhu, don't go there frequently.

8. नेहरो + अनुदिनं (नेहरोऽनुदिनं) वयं त्वां स्मरामः ।

Oh, Nehru, we think of you everyday.

Split the combined word & name the sandhi

1. राम त्वं अत्रैवाद्य वस ।

2.आलयस्याग्रतः पुष्करिणी वर्तते ।

3.ध्वजस्तम्भस्योपरि पताका लसति ।

4.सीतापि वनं गच्छतीति साकेतस्त्रियः अरुदन् ।

5.सूर्यः सर्वेषां प्राणान् आदायोदेति, आदायास्तमेति ।

Combine the split words.

बाला + उपवने क्रीडति ।

अद्य + एकादशी + अतः माता + उपवसति ।

अद्य + अत्र + एव + उपविश्य संलपामः ।

इति + उक्त्वा तौ + उभौ गृहं अगच्छताम् ।

----*----

## द्वात्रिंशः पाठः - Lesson - 32

Root forms - कृ - कर् - to do

8th conjugation (Transitive) (परस्मैपदी) (आत्मनेपदी च)

| | | | |
|---|---|---|---|
| लट् | करोति | कुरुतः | कुर्वन्ति |
| | करोषि | कुरुथः | कुरुथ |
| | करोमि | कुर्वः | कुर्मः |

| | | | |
|---|---|---|---|
| लङ् | अकरोत् | अकुरुतां | अकुर्वन् |
| | अकरोः | अकुरुतं | अकुरुत |
| | अकरवं | अकुर्व | अकुर्म |
| लोट् | करोतु | कुरुतां | कुर्वन्तु |
| | कुरु | कुरुतं | कुरुत |
| | करवाणि | करवाव | करवाम |
| विधिलिङ् | कुर्यात् | कुर्यातां | कुर्युः |
| | कुर्याः | कुर्यातं | कुर्यात |
| | कुर्यां | कुर्याव | कुर्याम |
| लिट् | चकार | चक्रतुः | चक्रुः |
| | चकर्थ | चक्रथुः | चक्र |
| | चकार-चकर | चकृव | चकृम |
| लृट् | करिष्यति | करिष्यतः | करिष्यन्ति |
| | करिष्यसि | करिष्यथः | करिष्यथ |
| | करिष्यामि | करिष्यावः | करिष्यामः |
| लृङ् | अकरिष्यत् | अकरिष्यतां | अकरिष्यन् |
| | अकरिष्यः | अकरिष्यतं | अकरिष्यत |
| | अकरिष्यं | अकरिष्याव | अकरिष्याम |

*Some examples*

कुलालः घटं करोति ।

The potter makes the pot.

किं करोमि? क यामि?

What do I do? where do I go.

कुरु कर्मैव तस्मात् त्वम्।

Therefore do only work.

ह्यः त्वं किं अकरोः ?

What did you do yesterday.

श्वः कार्यमद्यैव कुर्यात्।

You may do the work of tomorrow to day itself.

किं करिष्यति वै यमः?

What will the Lord of Death (yama) do?

चकार चरितं कृत्स्नम्।

Did the entire history.

यत्करोषि यदश्नासि तत्कुरु मदर्पणम्।

You offer it to me what ever you do or what ever you eat.

साधु नाकरवम्।

I did not do good.

*Translate into Sanskrit.*

1. Take bath in cold water.
2. The earth emerges from waters.
3. Do the work to be done.
4. What do we do daily?
5. Let this man do that work.
6. One goldsmith did that ornament.
7. You do whatever you do.

8. I shall destroy even the penance of Lord Shiva.
9. Valmiki composed (did) Ramayana.
10.Goutama Buddha thought about going out of his house.

------*------

# त्रयस्त्रिंशः पाठः - Lesson - 33

## विसर्गसन्धिः

Visarga is not a separate letter or syllable. It always joins with a vowel. It is pronounced as ""h''.

The changes when the visarga joins with the vowels from अ toऔ from this Sandhi.

Let us classify the consonants in three catagories. The first, five groups contain 25 letters. The अन्तःस्थ letter are 4 and उष्मा letter 4. We can classify them as hard and soft.

The hard consonants are the first two syllables of 5 groups (i.e) क-ख,च-छ,ट-ठ,त-थ,and प-फ and श ष स.

The soft syllables are the 3rd,4th,5th letters गघङ, जझञ, डढण, दधन, बभम, and य र ल व ह । so hard consonants are 13 & soft are 20.

1. उत्व सन्धिः- When the visarga is preceded by short अ and succeeded by short अ or 3rd 4th or 5th soft letters or य र ल व ह then visarga is changed to उ. Then the previous अ&उ combine as गुण सन्धि to form ओ.

e.g:– 1. बालः + अयं = बाल उ अयं = बालो + अयं then पूर्वरूपसन्धि takes place and अवग्रह comes in between. बालोऽयम्.

2. कः+अत्र, क-उ+अत्र, को+अत्र, कोऽत्र

3. सुन्दरः+अपि, सुन्दर-उ+अपि, सुन्दरो+अपि, सुन्दरोऽपि

e.g:– नृपः + जयति, ज is a soft consonant. नृप उ जयति - नृपो जयति Here no पूर्वरूप सन्धि as the succeeding letter is not 'अ'.

1.वीरः+गच्छति, वीर-उ-गच्छति, वीरो गच्छति ।

2.गजः+धावति, गज-उ+धावति, गजो धावति ।

3.मेघः+वर्षति, मेघ-उ+वर्षति, मेघो वर्षति ।

4.शिष्यः+वदति, शिष्य-उ+वदति, शिष्यो वदति ।

## २.विसर्गलोप सन्धिः-

I. The विसर्ग when preceeded by short अ and is suceeded by any vowel other then short अ, विसर्ग disappears. After this लोप or disappearance, no other combination takes place.

1. बालः+आगच्छति = बाल आगच्छति । Then दीर्घ सन्धि doesn't take place to form बालागच्छति ।

2. रामः+इह वसति, राम इह वसति । No गुणसन्धि to form रामेह.

3. सः ईशं नमति- स ईशं नमाति । (No सेशं)

4. रामः एवं वदति- राम एवं वदति (No रामैवं)

Another condition for लोपसन्धि is, if Visarga is preceeded by long आ and is suceeded by any vowel or 3rd,4th,or 5th letters or य,र,ल,व,ह then again विसर्ग disappears.

*examples:-*

बालाः+अवदन् = बाला अवदन् ।

काकाः+आकाशे डयन्ते = काका आकाशे डयन्ते ।

कन्याः+इतस्ततो गच्छन्ति = कन्या इतस्ततो गच्छन्ति ।

भक्ताः+ईशं स्तुवन्ति = भक्ता ईशं स्तुवन्ति ।

जनाः + एकत्र मिलन्ति = जना एकत्र मिलन्ति ।

वत्साः+औषधं पिबन्ति = वत्सा औषधं पिबन्ति ।

Exercises:-

1. रामः+विरामः+विरतः+मार्गः+नेयः+नयः+अनयः ।

2.दुर्लभः + दुर्गमः+दुर्गः + दुरावासः+दुरारिहा ।

3.धेनवः + आसायं तृणं चरन्ति ।

4.आर्ताः+विषण्णाः+नारायणशब्दं उच्चार्य सुखिनः +भवन्ति ।

5.देवः+न खलु कुशलः ।

6.श्रीसुब्रह्मण्येन रक्षितः+अहम् ।

7.क्रीडया श्रान्ताःबालाः + इतः + एव + आगच्छन्ति ।

8.विश्रवसः पुत्रः+रावणः + नाम राक्षसः + लङ्कायां अवसत् ।

----*----

# चतुस्त्रिंशः पाठः - Lesson - 34

## संक्षिप्तं अभिज्ञानशाकुन्तलम्

(कण्वस्याश्रमः । राजा दुष्यन्तः सेनापतिं परिजनं च विसृज्य एकान्ते विदूषकेन सह सम्भाषमाणो वर्तते ।

विदूषकः - महाराज भवता निर्मक्षिकं कृतम् । अस्य पादपस्य छायायां शिलातले भवान् निषीदतु । अहमपि सुखं आसीनो भवामि ।

राजा - अग्रतो गच्छ ।

विदूषकः - एतु भवान् । (उभौ परिक्रम्य उपविष्टौ)

राजा - माधव्य! त्वया चक्षुषोः फलं न आवाप्तम् । त्वया दर्शनीयं न दृष्टम्।

विदूषकः - ननु भवान् अग्रतो मे वर्तते ?

राजा - सर्वः आत्मीयं कान्तं पश्यति । अहं तु तां आश्रमस्य ललामभूतां शकुन्तलां अधिकृत्य ब्रवीमि ।

विदूषकः - किं भवान् तापसकन्यकां अभ्यर्थयते ?

राजा - पौरवाणां मनः न परिहार्ये वस्तुनि प्रवर्तते । मुनेरपत्यमपि सा अप्सरसः संभूता ।

विदूषकः - यथा पिण्डखर्जूरैः उद्वेजितः तिन्त्रिणीं अभिलषेत्, तथा स्त्रीरत्नानि परिभुञ्जानः भवान् इमां अभ्यर्थयते ।

राजा - न त्वं एनां पश्यसि । तेन एवं अवादीः ।

विदूषकः - यत् भवतोऽपि विस्मयं उत्पादयति तत् रमणीयं खलु ।

राजा - विधिना मनसा कृता स्त्रीरत्नसृष्टिः इयम् । अस्या रूपं अनर्घम् । विधिः कं वा अस्याः पतिं समुपस्थापयिष्यति इति न जाने ।

विदूषकः - तेन हि भवान् एनां लघु परित्रायताम् । अन्यथा कस्यापि तपस्विनः हस्ते पतिष्यति ।

राजा - एषा परवती । गुरुजनोऽपि न सन्निहितः ।

विदूषकः - भवति तस्याः कीदृशो रागः ?

राजा - सखीभिः साकं प्रस्थानसमये तया भावः कामं आविष्कृतः ।

विदूषकः - तेन हि भवान् गृहीतपाथेयो भवतु । तपोवनं उपवनं भवतु ।

राजा - सखे, तपस्विभिः कैश्चित् परिज्ञातोऽस्मि । केन अपदेशेन पुनः आश्रमपदं गच्छावः ? तत्र मार्गं चिन्तय ।

विदूषकः - कः अपरः अपदेशो युष्माकं राज्ञाम् ? नीवारस्य षष्ठं भागं उपहरन्तु इति ।

राजा - मूर्ख, अन्यमेव भागधेयं एते तपस्विनो निर्वपन्ति ।सः रत्नराशीनपि विहाय अभिनन्द्यते । चतुर्भ्यो वर्णेभ्यो यत् धनं उत्तिष्ठति, तत् क्षयि । एते आरण्यकाः अक्षय्यं तपसः षष्ठं भागं नः ददति ।

(नेपथ्ये) हन्त सिद्धार्थौ स्वः ।

राजा - (कर्णं दत्वा) अये धीरप्रशान्तः स्वरः । तत् तपस्विभिः भवितव्यम् ।

दौवारिकः - (प्रविश्य) जयतु जयतु भर्ता । एतौ द्वौ ऋषिकुमारौ प्रतिहारभूमिं उपस्थितौ ।

राजा - तेन हि अविलम्बं प्रवेशय तौ ।

उभौ - (प्रविश्य) विजयस्व राजन् !

राजा - (आसनादुत्थाय) अभिवादये भवन्तौ ।

उभौ - स्वस्ति भवते ।

राजा - (सप्रणामं परिगृह्य) आज्ञापयितुमिच्छामि ।

उभौ - भवान् आश्रमसदां इहस्थो विदितः । तेन भवन्तं प्रार्थयन्ते

राजा - किं आज्ञापयन्ति ?

उभौ - तत्रभवान् कण्वो महर्षिः न सन्निहितः । ततः रक्षांसि नः इष्टिविघ्नं उत्पादयन्ति । भवान् नाथो भूत्वा रक्षतु ।

राजा - अनुगृहीतोऽस्मि ।

विदूषकः - (अपवार्य) एषा अभ्यर्थना इदानीं भवतोऽनुकूला ।

राजा - (स्मितं कृत्वा) रैवतक ! सारथिः मद्वचनात् उच्यतां, सबाणासनं रथमुपस्थापयेति ।

दौवारिकः - यत् देव आज्ञापयति । (इति निष्क्रान्तः)

उभौ - (सहर्षं) पूर्वेषां अनुकारिणि त्वयि इदं युक्तरूपम् ।

आपन्नानां अभयदाने पौरवाः दीक्षिताः खलु ?

राजा - (सप्रणामं) गच्छतां पुरो भवन्तौ । अहमपि अनुपदं आगत एव।

उभौ - विजयस्व (इति निष्क्रान्तौ)

परिजनः- attendants,एकान्ते - aside, निर्मक्षिकं - free from flies, undisturbed ,absence of anyone, पादपः - tree, शिलातलं - a stone seat, निषीदतु - please sit, अग्रतः- in front of, एतु - please proceed, अवाप्तम् - was obtained, आत्मीयं कान्तं

पश्यति - sees one's own as attractive, ललामभूता - ornamental, अधिकृत्य - about, अभ्यर्थयते - requests, तापसकन्यका - daughter of the sage; पौरवाः - born in puru dynasty, परिहार्यं - avoidable, अपत्यं - child, पिण्डखजूरैः उद्वेजितः - got disturbed due to lot of dates, तिन्त्रिणी - tamarind, परिभुंजानः - one who enjoys, वदसि - you are saying, अनघं - flawless, विधिः - fate or creater, समुपस्थास्यति - going to present before, लघु - easily or lightly,परित्रायतां - please protect, परवती - dependent (she), रागः - desire, कामं - well, आविष्कृतं - was exhibited, गृहीतपाथेयः - one who is taking packed food for travel, परिज्ञातः - one who is already known, अपदेशः - pretext, नीवारः - the grains that grow on its own in the forest (which is not cultivated), उपहरन्तु - please bring, भागधेयः - tax, निर्वपन्ति - offer, रत्नराशीनपि विहाय - leaving the pile of gems, अभिनन्द्यते - is appreciated, वर्णेभ्यः = from four varnas; क्षयि - perishable, अक्षय्यं - unperishable, आरण्यकाः - people of the forest, (ददाति दत्तः ददति)नेपथ्ये - behind the screen, सिद्धार्थः - getting expected results, धीरप्रशान्तः - bold but calm, स्वरः - voice, दौवारिकः - gatekeeper, भर्ता - master, प्रतिहारभूमिः - the spot where one waits to get permission to enter, अविलम्बं - without delay, प्रवेशय - give entry, निष्क्रम्य - getting out, अभिवादये - I bow to get introduced, स्वस्ति - well, भवते - to (you) respected, परिगृह्य - accepting, आश्रमसदां - for the inmates of hermitage, विदितः - who is known, तत्र भवान् - respected

person; विघ्नं - obstacle, नाथः = Head (or) leader, सन्निहितः - present (standing close to), रक्षांसि - demons, इष्टिः - Sacrifice, अपवार्य - Staying humbly or speaking without other's knowledge (covering oneself), अभ्यर्थना - request, सबाणासनः - along with the bow, उपस्थापय - make it ready, पूर्वेषां अनुकारी - follower of the predecessors, पुरः = in front of, अनुपदं = immediately following; आपन्नः - One who's in danger, अभयदानं - giving asylum, दीक्षितः - involved,

1. Translate in English the whole lesson.

2. Split these words & name the Sandhis.

परिज्ञातोऽस्मि, रत्नराशीनपि, नाथो भूत्वा, अनुगृहीतोऽस्मि, भवतोऽनुकूला, आगत एव, पुरो भवन्तौ

3. Combine these words and name the Sandhi.

केन अपदेशेन, पुनः आश्रमपदं, कः अपरः अपदेशः, सः रत्नराशीनपि, विहाय अभिनन्द्यते, यत् धनं, एते आरण्यकाः अक्षय्यं, नः ददति, तपस्विभिः भवितव्यं, द्वौ ऋषिकुमारौ, हि अविलम्बं, ततः रक्षांसि, नः इष्टिविघ्नं, अभ्यर्थना इदानीं, सारथिः मद्वचनात्, त्वयि इदं, पौरवाः दीक्षिताः, अहमपि अनुपदं

4.Give the corresponding विभक्ति and other two forms of these words. अपदेशेन, उपस्थितौ, तपस्विनः, राशीन्, आपन्नानां ।

5. Give the other forms of all persons of the given लकाराः of the given words.

गच्छावः, उपहरन्तु, उत्तिष्ठति, आज्ञापयति

।। शुभम् ।।